Statement about ownership of CHANDAMAMA (Sanskrit)
Rule 8 (Form VI), Newspapers (Central) Rules, 1956

| | |
|---|---|
| 1. Place of Publication | CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras - 600 026. |
| 2. Periodicity of Publication | MONTHLY<br>Ist of each calender month |
| 3. Printer's Name<br>Nationality<br>Address | B.V. REDDI<br>INDIAN<br>Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras - 600 026 |
| 4. Publisher's Name<br>Nationality<br>Address | B. VISWANATHA REDDI<br>INDIAN<br>Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras - 600 026 |
| 5. Editor's Name<br>Nationality<br>Address | B. NAGI REDDI<br>INDIAN<br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras - 600 026 |
| 6. Name and address of<br>Individuals who own the paper | CHANDAMAMA PUBLICATIONS<br>PARTNERS :<br>1. Sri B. VENKATRAMA REDDY<br>2. Sri B.V. NARESH REDDY<br>3. Sri B.V. SANJAY REDDY<br>4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI<br>6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA<br>8. Kum. B.L. ARCHANA<br>9. Kum. B.L. ARADHANA (Minor)<br>(Minor admitted to the benefits of Partnership)<br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras - 600 026 |

I, B Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

Ist March 1994

B. VISWANATHA REDDI
Signature of the Publisher



I shared my homework. And some maths.
Did some patterns. Shared my Mortons.



# MORTON
SWEETS







We enjoy our School days....and Lunch Breaks more so with Mortons which we
share. It has been our Family's favourite for years and years.
Delicious and yummy in so many flavours. All with the goodness of
Creamy Milk, Glucose and Sugar.
Chocolate and Coconut Cookies, Rose Eclairs, Supreme Chocolate
and Coconut Toffees, Lacto Bonbons, Mango King and so
many other delicious treats.
Um m m m m, Every bite a yummy delight.



A lifetime of real goodness

**MORTON CONFECTIONERY & MILK PRODUCTS FACTORY**
P.O. : Marhowrah 841 418.Dist. : Saran, Bihar

# भवत्याः पुत्रः वा एषः?

| | |
|---|---|
| रमा – एषः भवत्याः पुत्रः वा? | He is your son? |
| रेखा – न। मम अग्रजायाः पुत्रः। | No, he is my sister's son. |
| र – मुखसाम्यं दृष्ट्वा अहं चिन्तितवती आसं यत् एषः भवत्याः पुत्रः स्यात् इति। | Because of the resemblence, I thought he was your son. |
| रे – मुखसाम्यम् अस्ति इति तु सत्यम् एव। मम पुत्रः गृहे क्रीडन् अस्ति। | There is resemblence, you are right. My son is at home, playing. |
| र – भवती यत्र गच्छति तत्र आगच्छामि इति न वदति वा सः? | He does not want to go with you when you go out? |
| रे – कुतो न? निवार्यमाणः अपि आगच्छति एव। किन्तु कदाचित् मित्रैः सह क्रीडन् 'भवती गत्वा आगच्छतु, अहं न आगच्छामि' इति अपि वदति सः। | Why not? He does. He insists on going even when I say no. But sometimes when he is playing with friends, he tells his mother, "Mummy, you go. I won't come". |
| र – अटने यावान् आनन्दः ततोऽपि अधिकः आनन्दः क्रीडने बालानाम्। अतः एव कदाचित् ते तथा न व्यवहरन्ति। एषः कदा आगतवान्? | Children love playing more than going out, don't they? That is why they speak that way sometimes. When did this boy come? |
| रे – ह्यः मातापितृभ्यां सह आगतवान् एषः। नगरदर्शनकुतूहलेन मया सह प्रस्थितवान्। | He arrived yesterday with his parents. He has come along with me to have a look round the city. |
| र – किं रे वत्स! क्रीडा न रोचते वा भवते? | What my young friend, you don't like to play? |
| रे – क्रीडायां विशेषरुचिः अस्त्येव एतस्यापि। तथापि अदृष्टपूर्वस्य नगरस्य दर्शने अधिकं कुतूहलम्। | He too likes to play. But he is more interested in going round out the city which he has not seen before. |

# चन्दमामा

संस्थापकः – 'चक्रपाणिः'        सञ्चालकः – 'नागिरेड्डी'

## उत्तमस्य भविष्यस्य निमित्तम्

यदा मार्चमासः प्राप्यते तदा विद्यार्थिनां मनः भीत्या आक्रान्तं भवति, यतः तदा विद्यालय-महाविद्यालयानां वार्षिकी परीक्षा आसन्ना भवति। कदाचित् परीक्षा एप्रिल्-मे-मासान्तं यावत् प्रचलेत् अपि। अग्रिमकक्ष्यां प्रति गमनार्थं पदवीं प्राप्तुं वा अर्हता अस्ति वा न वा इति निर्णेतुं स्थितं साधनम् एव परीक्षा नाम।

परीक्षातः भीतिः कुतो वा भवेत्? यदि प्रतिदिनं कक्ष्यायाम् उपस्थीयते, यदि च अध्यापकेन बोधिताः विषयाः सावधानं श्रूयन्ते, यदि च पाठ्यस्य मुख्यांशाः मनसि धार्यन्ते, यदि च गृहपाठः तत्तद्दिने व्यवस्थितं क्रियते, यदि च तदा तदा पाठितस्य अंशस्य मननं क्रियते, तर्हि परीक्षातः भीतेः भवितव्यं नास्ति एव। परीक्षापरिणामः तादृशः एव भवति, पूर्वसन्नाहः अस्माकं यादृशः भवति।

विद्यालयप्रवेशसमनन्तरम् एव यदि विद्यार्थी पठनार्थम् अपि समयं निश्चित्य मनसा सिद्धः सन् विद्याभ्यासम् अनुवर्तयति तर्हि दुर्मार्गस्य वञ्चनामार्गस्य वा आश्रयणं करणीयं न भवति।

अयुक्तेन मार्गेण गमनं, सहपाठिनः, अध्यापकस्य वा वञ्चनम् इत्यादयः वस्तुतः आत्मघातुकाः एव भवन्ति। तादृशेन प्राप्तः जयः सर्वथा तात्कालिकः। यदा भाविजीवने पदभारः निर्वोढव्यः भवति, यदा जीवने प्रगतिः साधनीयः भवति, तदा पूर्वप्रस्तुताः मार्गाः कदापि उपकारकाः न भवन्ति।

अतः किं वञ्चनामार्गाश्रयणेन? आत्मशक्तौ सदा विश्वासः भवेत्। अनीतिमार्गस्य आश्रयणं किं, चिन्तनम् अपि न भवेत् जीवने। अस्माकं सर्वविधाः अपि प्रयत्नाः उत्तमस्य भविष्यस्य निमित्तं भवतु, न तु अधःपतनहेतोः भविष्यस्य निमित्तम्।

सम्पुटः – १०        मार्च-१९९४        सञ्चिका – १८

प्रतिकृतिमूल्यं रू. ४-००  •  वार्षिकं ग्राहकशुल्कं रू. ४८-००

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अदृष्टपूर्वम् - Not seen before
अन्तर्हितः - Disappeared
अवर्णनीया - Indescribable
अशनिः - Lightning
आत्मख्यापनम् - Self-praise
आनुवंशिकम् - Hereditary
आम्लता - Sourish
आश्वासनम् - Assurance
उत्कोचः - Bribe
उदियात् - May arise
उन्मीलितवान् - Opened
उपदेष्टा - Preceptor
उल्लेखनम् - Mention
उष्ट्रः - Camel
कज्जलम् - An ointment for the eye
कटुता - Pungent
कर्तयित्वा - Having cut
काल्पनिकता - Imaginary
कूर्मः - Tortoise
जतुका - Bat
जलबन्धः - Dam
तप्तः - That which has been heated
तप्तरेखा - Mark of burn on skin (punishment)
धूमवर्तिका - Cigarette
निम्नस्तरीयम् - Of low quality
निरङ्कुशता - Uncontrolled
पदच्युतिः - To dismiss
प्रभवामि - Would become capable
प्रवासोद्यमः - Tourism
प्रसाधयति - Combs (V)
प्रस्थः - A measure
प्राविशत् - Entered
वरण्डकः - Howdah
विद्यमानम् - Existing
शिवेतरः - Other than Shiva (God)
सूच्यौषधम् - Injection
स्वेदः - Sweat
हस्तिपकः - Mahout

# माल्दीव्द्वीपसमूहे अध्यक्षचयनम्



भारतस्य मित्रं मामून् अब्दुल् गयाम् नवम्बर्मासस्य ११ दिनाङ्के माल्दीवद्वीपसमूहस्य अध्यक्षपदवीम् अलङ्कृतवान्। सः चतुर्थवारम् एतं पदम् अलङ्कुर्वन् अस्ति। लोकसभया(स्टेट् मज्लिस्) एतस्य एकस्य एव नाम सूचितम् इत्यतः निर्वाचनं विनैव एषः चितः अभवत्। ततः प्रजाभिप्रायसङ्ग्रहः कृतः। अक्टोबर्- प्रथमे दिनाङ्के प्रवृत्तस्य जनाभिप्रायसङ्ग्रहस्य सन्दर्भे ९३% जनाः लोकसभायाः सूचनाम् अनुमोदितवन्तः।

अभिप्रायसङ्ग्रहात् पूर्वं जनाः चिन्तितवन्तः आसन् यत् गयाम्वर्यः अध्यक्षपदस्य अभ्यर्थी न भविष्यति इति। गयाम्वर्यस्य अन्तरङ्गमार्गदर्शकः बन्धुः च इलियस् इब्राहिं स्वनाम लोकसभया यथा सूचितं स्यात् तथा कर्तुं प्रयत्नं कृतवान्। तस्य विषये कैश्चित् दोषारोपणं कृतम् आसीत्। विचारणतः तानि दोषारोपणानि दृढीकृतानि अभवन्। अतः सः १५ वर्षात्मकेन देशात् बहिष्कारेण दण्डितः अभवत्। अध्यक्षपदम् अलङ्कर्तुम् अन्यः अर्हः कोऽपि न आसीत्। अतः गयाम्वर्यस्य नाम लोकसभया सूचितम्।

गयाम्वर्येण बहूनि आश्वासनानि दत्तानि सन्ति। नूतनस्य संविधानस्य रचनम्, अधिकारविकेन्द्रीकरणम्, निर्वाचनक्रमे परिष्कारः, राजकीयपक्षाणाम् अनुमतिः, युवजनतायाः विशेषप्राधान्यम् इत्यादयः तेषु आश्वासनेषु अन्यतमाः।

सः युवक-युवतिषु मादकवस्तुसेवनरूपं दुर्व्यसनं यत् प्रवर्धमानं दृश्यते तत् कठोरं खण्डयति। तारुण्यारम्भे स्थितेषु युवति-युवकेषु मादकवस्तुसेवनं विशेषतः दृश्यते यत्, तत् देशस्य अधःपतनं सूचयति इति अभिप्रैति सः। युवजनतायाः भाविजीवनम् उज्ज्वलं स्यात् इति उद्देशेन सः रषीदा-युसूफवर्यां स्त्रीक्षेमविभागस्य सचिवां कृतवान् अस्ति।

प्रपञ्चे स्वतन्त्रेषु देशेषु लघुतमः देशः मालुदीवुद्वीपसमूहः। एतस्य वैशाल्यं १३० वर्ग-कि.मी. स्यात्। १२०० द्वीपैः युक्तस्य एतस्य देशस्य २०० द्वीपेषु केवलं जनाः निवसन्ति। कोऽपि द्वीपः १३ वर्ग-कि.मी.तः अधिकविस्तारयुतः नास्ति।

मालुदीवुद्वीपसमूहस्य प्राचीनेतिहासः सुस्पष्टं न ज्ञायते। एवं हि श्रूयते यत् क्रि.पू. ४ शतके द्राविडवंशीयाः




केचन भारतीयाः ऐदम्प्राथम्येन तत्र गताः इति, ततः भारतस्य उत्तरभागात् अपि केचन तत्र गताः इति च। अनन्तरकाले श्रीलङ्कातः अपि केचन तत्र गताः। बौद्धमतं तत्र स्थिरं जातम्। १२ शतके एतद्देशस्य राजा इस्लांमतानुयायी जातः। सः प्रजाः आदिष्टवान् यत् सर्वाः इस्लांमतम् एव स्वीकुर्युः इति। ततः तत्र बहूनि यवनमतमन्दिराणि निर्मितानि अभवन्।

१८८७ तमे वर्षे एषः द्वीपसमूहः आंग्लानाम् अधीनः जातः। १९६५ तमे वर्षे एषः स्वतन्त्रः जातः। १९६८ तमे वर्षे गणतन्त्रप्रधानः जातः।

तस्मिन् एव वर्षे इब्राहिं वजीर् एतस्य अध्यक्षः जातः। १९७८ तमवर्षं यावत् सः तस्मिन् पदे आसीत्। ततः गयामुर्वयः अध्यक्षपदम् अलङ्कृतवान्।

## माल्दीव्द्वीपविषये विस्मयकारकाः विषयाः

* माल्दीव्द्वीपसमूहे ये निवसन्ति ते सर्वे एकत्र स्थिताः चेत् एकं विशालं क्रीडाङ्गणं पूर्णं भवेत्, तावदेव।
* एतद्देशीयाः बहवः आंग्लभाषाभाषिणः। अरबिकपदैः मिश्रिता सिंहलभाषासदृशी 'दिवेही' भाषा अपि अत्र मुख्या एव।
* एतद्देशे राजकीयपक्षाः, पत्रालयाः, करव्यवस्था वा न सन्ति।
* समुद्रतीरस्थान् रक्षणदलात् ऋते अन्या सैन्यव्यवस्था नास्ति अत्र।
* एतद्देशे कारागारं नास्ति। हिंसात्मकाः अपराधाः अत्र विरलाः।
* एतद्देशस्य आर्थिकस्थितिः मत्स्योद्यमं प्रवासोद्यमं च आधारीकृत्य तिष्ठति।



# राजनिद्रा

स्वर्णपुरीदेशस्य राजा कदाचित् निद्रासमये कञ्चन स्वप्नं दृष्टवान्। स्वप्ने तेन नलमहाराजः दृष्टः। विविधान् पाकान् सज्जीकृत्य परिविष्टवान् सः नलमहाराजः। पाकस्य रुचिस्तु अपूर्वा आसीत्। राजा स्वप्ने एव तं नलमहाराजं खाद्यनिर्माणक्रमं पृष्ट्वा ज्ञातवान्। तावता राज्ञः जागरणं जातम्। किन्तु स्वप्ने आगतेन नलमहाराजेन बोधितः खाद्यनिर्माणक्रमः राज्ञा सम्यक् स्मर्यते स्म। 'पाचकद्वारा एतानि खाद्यानि मया कारणीयानि' इति निश्चित्य राजा अनन्तरदिने पाकशालां गतवान्।

तत्समये पाचकः स्थालिकायां स्थितं महाराजेन अदृष्टपूर्वं खाद्यं खादन् आसीत्। महाराजः सकुतूहलम् पाचकं पृष्टवान्— "किम् एतत् अपूर्वं खाद्यम्?" इति।

तदा पाचकः उक्तवान्— "प्रभो! भवादृशैः खादनयोग्यं न एतत्। अत्र आम्लता, कटुता इत्यादयः अधिकतया सन्ति। एतत् यः खादति सः प्रायः रात्रौ निद्रां न प्राप्नुयात्। प्रतिदिनं भवतः स्तरानुगुणम् अहं पाकं कृत्वा निम्नस्तरीयम् एतं पाकं मदर्थं सज्जीकृत्य खादामि" इति।

राजा तस्य अदृष्टपूर्वस्य खाद्यस्य खादनम् इच्छन् पाचकेन निवार्यमाणः अपि तत् खादितवान्। ऐदम्प्राथम्येन खादितम् इत्यतः विशिष्टा रुचिः अपि दृष्टा राज्ञा। "इतः परं सप्ताहे एकवारम् एतादृशं खाद्यं मदर्थं सज्जीकरोतु" इति आदिश्य ततः गतवान् राजा।

पाकस्य कटुतायाः आम्लतायाः च आधिक्यस्य कारणतः तस्य दिनस्य रात्रौ राज्ञा निद्रा न प्राप्ता। उदरे उरसि च अवर्णनीया पीडा। सः उत्थाय पार्श्वे

"भामहः"



सुप्तवतीं महाराज्ञीम् उत्थाप्य– "देवि! निद्रा एव न प्राप्यते मया" इति उक्तवान्।

"युवराजः विलासजीवने मग्नः इति चिन्ता भवतः। वयसः कारणतः सः विलासजीवने आसक्तः जातः। कर्तव्यं बोधितं चेत् सः निश्चयेन सन्मार्गगामी भविष्यति। अतः इदानीं निश्चिन्ततया निद्रां करोतु भवान्" इति उक्त्वा सा पुनरपि निद्रावशं गता।

युवराजस्य विलासजीवनस्य विषयः राजा इतः पूर्वं न श्रुतः आसीत्। अतः सः पत्नीम् एतद्विषये अधिकं प्रष्टुम् इष्टवान्। किन्तु राज्ञी पुनरपि गाढनिद्रायां निमग्ना इत्यतः राजा मौनम् आश्रितवान्।

निद्राहीनतां सोढुम् अशक्तः राजा वैद्यस्य आनयनार्थं दूतं प्रेषितवान्। अल्पेन कालेन एव वैद्येन सह मन्त्री, कोषाधिकारी, सेनाधिपतिः चापि आगताः।

वैद्यः राजानं सम्यक् परीक्ष्य अपि निद्रायाः अप्राप्तेः कारणं न ज्ञातवान्। सङ्कोचकारणतः राजा अपि आत्मना यत् खादितं तद्विषये किमपि न उक्तवान्।

"व्ययः प्रतिदिनं वर्धते, व्ययानुगुणम् आयः नास्ति इति तु सत्यम् एव। किन्तु एतदर्थम् एतावती चिन्ता न करणीया। सर्वासाम् अपि समस्यानां कश्चन परिहारमार्गः अपि भवति एव" इति सान्त्वनवचनम् उक्तवान् कोषाधिकारी।

"राजद्रोहिणः प्रतिवेशिराजानां साहाय्येन सिंहासनं स्वायत्तीकर्तुं सिद्धाः सन्ति यत् तदर्थं किम् एतावत्या चिन्तया? योग्येन क्रमेण राजद्रोहिणः दण्डयिष्यामः वयम्" इति उक्तवान् सेनाधिपतिः।

"राजोद्योगिनः अनीतिपराः सन्ति इत्यतः प्रजाः कष्टम् अनुभवन्तः सन्ति, इत्येदर्थम् एवं चिन्तया किम्? योग्यम् उपायं विचिन्त्य सर्वं समीकरिष्यामः तावत्" इति उक्तवान् मन्त्री।

राजा ततः तान् प्रेषितवान्। 'वास्तविकं कारणं मातरं यदि वदेयं तर्हि सा माम् अवगच्छेत्' इति चिन्तयन् राजा मातुः समीपं गतवान्।

तत्समये राजमाता जागरिता एव आसीत्। पुत्रं दृष्ट्वा सा उक्तवती– "वत्स! इतोऽपि

निद्रा न प्राप्ता वा भवता? यस्य पुत्रः विलासजीवने मग्नः, यस्य राज्यम् वशीकर्तुं शत्रवः प्रयतमानाः सन्ति, यस्य राज्ये अधिकारिणः अनीतिपराः तेन राज्ञा कथं वा निद्रा प्राप्येत? पुत्रस्य साहाय्यं करोतु इति अहं भवतः पितरम् उक्तवती। किन्तु सः उपेक्षां प्रदर्शयन् निद्रां कृतवान्। भवतः स्थितिं स्मरन्ती निद्राम् अप्राप्नुवती भवतः पितुः उपेक्षाव्यवहारविषये खेदं प्राप्तवती अस्मि'' इति।

''अम्ब! मम निद्रायाः अप्राप्तेः कारणं भवत्या उक्तेषु किमपि न। आहारदोषः एव निद्रायाः अप्राप्तेः कारणम्'' इति उक्तवान् राजा।

तदा राजमाता हसन्ती उक्तवती– ''बाल्यादपि भवान् एवम् एव। स्ववेदनायाः वास्तविकं कारणं भवान् स्वयम् अवगन्तुं न शक्नोति। यः राजा सुखेन निद्रां करोति तस्य राज्ये समस्याः न भवन्ति इति ज्ञायते। समस्यासु सतीषु अपि यः राजा निद्रां करोति सः प्रजाहितस्य अचिन्तकः इति उच्यते। भवान् प्रजानां कष्टस्य निवारणार्थम् उपायान् चिन्तयतु। निद्रा अवश्यं प्राप्यते'' इति।

राजा प्रतिवचनं किमपि अनुक्त्वा मातरं नमस्कृत्य ततः निर्गतवान्। ततः गच्छतः राज्ञः मनसि विचारः– 'एतावत्पर्यन्तम् अहं चिन्तितवान् आसं यत् मन्त्रि-सेनापति -कोषाधिकारि-प्रभृतयः प्रजाहितकार्यं चिन्तयन्ति इति। अतः एव निश्चिन्तः आसम्। समस्यासु एतावतीषु सतीषु अपि मया निश्चिन्तं निद्रा क्रियते स्म यत् तत् सर्वथा अनुचितं जातम्। धिक् मम अज्ञानम्। मम व्यवहारः मयि एव लज्जां जनयति। सः पाचकः अजानन् एव मम निद्रायाः अप्राप्तेः कारणं जातः सन् मयि विवेकस्य उदयस्यापि कारणं जातः। सः मया सत्करणीयः' इति।

अनन्तरदिने राजा तं पाचकम् आहूय सत्कृतवान्। 'राज्ञः निद्राभङ्गस्य कारणम् अहम् एव' इति जानतः पाचकस्य तु राज्ञः व्यवहारेण नितराम् आश्चर्यं जातम्।





# शनिपीडा

गङ्गावतीनामके ग्रामे कृष्णशास्त्रिनामकः पुरोहितः आसीत्। यद्यपि सः पौरोहित्यसम्बन्धिनः मन्त्रान् केवलं जानाति, तथापि सः सर्वेषां समीपं गत्वा आत्मप्रशंसां करोति स्म यत्– अहं ज्योतिश्शास्त्रे महान् पण्डितः। यस्य कस्यापि भविष्यं वक्तुं समर्थः इति। कृष्णशास्त्रिणः वचने विश्वस्य तं महान्तं ज्योतिषिकं मन्यन्ते स्म तद्ग्रामीणाः जनाः।

कृष्णशास्त्री तद्ग्रामस्य मुग्धान् जनान्– ''सद्यः एव अस्य ग्रामस्य कष्टकालः सन्निहितः भविष्यति'' इति वदति स्म। एतस्य वचनं सत्यम् इत्येव चिन्तयन्तः जनाः तम् एव परिहारम् अपि पृच्छन्ति स्म। तदा कृष्णशास्त्री पीडापरिहारार्थं पूजाः होमादिकं च करणीयानि इति वदन् तेभ्यः प्रभूतं धनं धान्यादिकं च सम्पादयति स्म।

एवं स्थिते रमणमूर्तिनामकः कश्चन युवकः तद्ग्रामस्य शालाशिक्षकत्वेन आगतवान्, कृष्णशास्त्रिणः गृहस्य पार्श्वे विद्यमाने लघुगृहे वासं कृतवान् च। ग्रामजनैः क्रियमाणां कृष्णशास्त्रिविषयकप्रशंसां शृण्वन् अपि औदासीन्यं प्रदर्शयति स्म रमणमूर्तिः।

कदाचित् सायङ्कालसमये कृष्णशास्त्री रमणमूर्तिना सह सम्भाषणावसरे उक्तवान्– ''मम पौरोहित्यं न आनुवंशिकतया आगतम्। किन्तु ज्योतिश्शास्त्रविषये एव मम अभिरुचिः अधिका। ज्योतिश्शास्त्रविषये अहं यावत् जानामि तावत् अस्मिन् ग्रामे न कोऽपि जानाति। तावदेव न, मुखदर्शनमात्रेण एव यस्य कस्यापि भविष्यं वक्तुं समर्थः अस्मि अहम्। मासाभ्यन्तरे एव भवान् अनारोग्येण पीडितः

भविष्यति। महती हानिः अपि भविष्यति। एतस्य कारणं तु शनिपीडा' इति।

कृष्णशास्त्रिणः वचनं श्रुत्वा रमणमूर्तिः सधैर्यं पृष्टवान्– "एवं वा? तर्हि शनिपीडापरिहारार्थं कः मार्गः?" इति।

"मार्गः तु अस्ति एव। शनिपीडार्थं पूजा करणीया भवता। पूजाविधानं तु एवमस्ति– मादृशाय महापण्डिताय गोदानं करणीयम्" इति उक्तवान् कृष्णशास्त्री।



एतत् श्रुत्वा रमणमूर्तिः किञ्चित् विचिन्त्य उक्तवान्– "यदि गोदानं करणीयं, तर्हि न्यूनातिन्यूनं पञ्चशतं रूप्यकाणि वा आवश्यकानि खलु? किन्तु इदानीं मम समीपे तु केवलं द्विशतरूप्यकाणि एव सन्ति" इति।

तदा कृष्णशास्त्री मन्दहासपूर्वकम् उक्तवान्– "प्रथमम् एव भवान् शनिपीडाश्रवणेन खिन्नः अस्ति। तादृशात् भवतः अहं पञ्चशतरूप्यकाणां व्ययं कारयितुं सर्वथा न इच्छामि। मम सकाशे एका उत्तमा धेनुः अस्ति। द्विशतरूप्यकैः तां धेनुं भवते दास्यामि। अनन्तरं ताम् एव धेनुं महर्यं दानरूपेण ददातु भवान्। उत्तमदिनम् इति कारणतः शनिवासरे एव गोदानकार्यक्रमः भवतु" इति।

तस्मिन् एव दिने रमणमूर्तिः कृष्णशास्त्रिणे द्विशतं रूप्यकाणि दत्त्वा धेनुं क्रीत्वा गृहं गतवान्।

त्रिचतुराणि दिनानि अतीतानि। अनन्तरदिने कृष्णशास्त्री रमणमूर्तिं दृष्ट्वा उक्तवान्– "आगामिशनिवासरे भवान् भवतः गृहे पूजादिकं कारयित्वा दक्षिणापूर्वकं गोदानं करोतु" इति।

तदा रमणमूर्तिः ससन्देहं पृष्टवान्– "कृष्णशास्त्रिमहोदय! वस्तुतः मम शनिपीडा भविष्यति वा?" इति।

रमणमूर्तेः वचनं श्रुत्वा कुपितः कृष्णशास्त्री प्रतिवेशिनः कांश्चन आहूय– "पश्यन्तु। नूतनतया अस्माकं ग्रामं प्रति आगतः एषः अध्यापकः कथं ससन्देहं प्रश्नं करोति माम्! ज्योतिश्शास्त्रविषये अहं महान् पण्डितः इति भवन्तः सर्वे जानन्ति। किन्तु एषः रमणमूर्तिः मम पाण्डित्ये न विश्वसिति।

'विनाशकाले विपरीतबुद्धिः।' मूर्खः इव व्यवहरति एषः" इत्युक्त्वा रमणमूर्तिं पश्यन् उक्तवान्– "ज्येष्ठाः वदन्ति 'बुद्धिः कर्मानुसारिणी' इति। अतः अहं पुनः पुनः साग्रहं वदन् अस्मि। भवान् गोदानं न करोति चेत् मासाभ्यन्तरे शनिः भवन्तं पीडयिष्यति। मम वचने विश्वसितु भवान्। ज्येष्ठानां हितवचनपालनं बुद्धिमतां लक्षणम्" इति।

कृष्णशास्त्रिणः वचनेन किञ्चित् अपि न विचलितः रमणमूर्तिः। सः तत्र आगतान् प्रतिवेशिनः दृष्ट्वा कृष्णशास्त्रिणम् उक्तवान्– "कृष्णशास्त्रिमहोदय! एतादृशी धेनुः मया अद्यपर्यन्तं कुत्रापि न दृष्टा। एषा धेनुः दिने दशप्रस्थपरिमितं क्षीरं ददाति। तस्मात् एतां धेनुं दानरूपेण न दास्यामि अहम्। भवतः वचनानुसारं शनिप्रभावेण मम यदि महती धनहानिः भविष्यति, तर्हि 'मम अपराधं क्षाम्यतु' इति प्रार्थयन् भवते धेनुद्वयं दानरूपेण दास्यामि। मासाभ्यन्तरे यदि धनहानिः न भविष्यति, तर्हि भवता उक्तं जातकफलम् असत्यम् इति भावयामि" इति।

एतत् श्रुत्वा तत्र सम्मिलिताः सर्वे अपि चिन्तितवन्तः यत् अध्यापकेन रमणमूर्तिना उक्तं न्याय्यम् एव इति।

एतेन लज्जितः कृष्णशास्त्री गृहं गत्वा पत्नीं सखेदम् उक्तवान्– "नूतनतया अस्माकं ग्रामं प्रति आगतः रमणमूर्तिः अतीव चतुरः अस्ति। मया उक्तं ज्योतिषं कथमपि सत्यं न भवति। वृथा कामधेनुसदृशीं धेनुं केवलं द्विशतरूप्यकैः विक्रीतवान् अहम्। अपि च अस्मिन् ग्रामे ज्योतिश्शास्त्रे महान् पण्डितः अहम् इति जनानां विश्वासः आसीत् एतावत्पर्यन्तम्। इतःपरं जनाः अपि मयि न विश्वसन्ति" इति।

एतत् श्रुत्वा कृष्णशास्त्रिणः पत्नी पतिं सान्त्वयन्ती उक्तवती– "अस्मिन् ग्रामे, पौरोहित्येन यत् धनं प्राप्यते, तेन एव वयं सुखेन जीवितुं शक्नुमः। पुनः ज्योतिश्शास्त्रतः धनसम्पादनं किमर्थम्?" इति।






(उत्तुङ्गस्य साहसप्रवृत्तिं दृष्ट्वा सन्तुष्टः नागपुर्याः राजा वचनं दत्तवान् यत् साहाय्यार्थं भवता सह काञ्चन भटान् प्रेषयिष्यामि इति। नागपुर्याः राजकुमारी मल्लिका उत्तुङ्गम् आहूय नागपुर्याः सिंहासनं प्राप्तुं नागसिंहेन क्रियमाणं कुतन्त्रं निवेद्य प्रार्थितवती यत् कुतन्त्रस्य भङ्गार्थं साहाय्यं करणीयम् इति। अनन्तरदिने युवराज्ञ्याः भवने स्थितानि शताब्दिकापुष्पाणि अदृश्यतां गतानि। आश्चर्यचकितः राजा सेनाधिपतिम् आज्ञापितवान् यत् पुष्पाणि कथमपि अन्वेष्टव्यानि इति। तदनन्तरम्.....)

राजभवनात् बहिः आगत्य सेनाधिपतिः उत्तुङ्गम् आनेतुं कञ्चित् भटं प्रेषितवान्। सेनाधिपतिः चिन्तयति स्म यत्– शताब्दिकापुष्पाणाम् अन्वेषणदायित्वं दलनायकः नागसिंहः निर्वहेतु इति। किन्तु नागसिंहस्य राजधान्यां वासं न इच्छति राजा। अतः तच्चिन्तनं परित्यक्तवान् सेनाधिपतिः।

शताब्दिकापुष्पाणां विषये एव चिन्तयन् सेनाधिपतिः स्वावासस्थानं गतवान्।

किञ्चित्कालानन्तरम् उत्तुङ्गः तत्र आगत्य सेनाधिपतिं नमस्कृत्य– "अस्माभिः कदा प्रस्थानं करणीयम्? मम नौका समुद्रतीरे एव अस्ति। अन्याः नौकाः सिद्धाः वा? मया आनीतेषु कानिचन शताब्दिकापुष्पाणि कौभवस्य गृहे एव सन्ति। मम प्रस्थानं कदा



इति ज्ञातं चेत् तानि शताब्दिकापुष्पाणि आनेतुं शक्नोमि अहम्'' इति सोत्साहम् उक्तवान् उत्तुङ्गः।

तदा सेनाधिपतिः उक्तवान्– ''नौकाः सिद्धप्रायाः सन्ति। भवता सह के भटाः प्रेषणीयाः इति अपि चिन्त्यमानम् अस्ति। भवता सह दलनायकं नागसिंहं प्रेषयामः। कदा कथं प्रस्थानम्, राक्षसमृगश्च कथं सम्मुखीकरणीयः इत्यादीन् विषयान् चर्चयितुं नागसिंहः आगमिष्यति'' इति।

सेनाधिपतेः वचनं श्रुत्वा– ''नागसिंहः कदा आगमिष्यति?'' इति पृष्टवान् उत्तुङ्गः।

''एतावति काले एव तेन आगन्तव्यम् आसीत्। किमर्थं विलम्बः इति तु न ज्ञायते'' इति यावत् वदन् आसीत् सेनाधिपतिः तावता नागसिंहः तत्र आगतवान्।

सेनाधिपतिः नागसिंहम् उक्तवान्– ''एषः एव उत्तुङ्गः। एतेन सह भवान् आगमिष्यति इति ज्ञात्वा अतीव सन्तुष्टः अस्ति एषः। एतं भवतः वासस्थानं प्रति नयतु। कदा प्रयाणम्, तद्विषये काः जागरूकताः आश्रयणीयाः इत्यादिविषयान् सम्यक् चर्चां कुरुताम्। एषः उत्तुङ्गः प्रयासे विजयी भवतु इति महाराजस्य इच्छा। अतः एतद्विषये अपि गभीरतया चिन्तनीयम् भवद्भ्याम्। कदा प्रस्थानम् इति निर्णीय मा सूचयतु'' इति।

तदा नागसिंहः मन्दहासपूर्वकं– ''सेनाधिपते! भवतः वचनं शिरसा वहामि। अस्माकं समुद्रप्रयाणविषये सम्यक् चिन्तनं कृत्वा पुनः भवन्तं द्रक्ष्यामः'' इति उक्त्वा उत्तुङ्गेन सह सैनिकशिबिरं गतवान्।

नागसिंहः उत्तुङ्गः च यदा शिबिरस्थानं प्राप्तवन्तौ, तदा नागसिंहः उत्तुङ्गं तिरस्कारपूर्वकं पृष्टवान्– ''महाराजः अन्ये च बहवः भवतः प्रयाणं प्रशंसन्तः अतीव सन्तुष्टाः सन्ति। किमर्थं भवान् एतादृशं साहसप्रवासम् आरब्धवान् अस्ति?'' इति।

नागसिंहस्य एतादृशम् उपहासपूर्णं वचनं श्रुत्वा उत्तुङ्गः किञ्चिदिव चिन्ताक्रान्तः। झटिति तस्य मुखात् किमपि वचनं न निर्गतम्। तस्य मनसि विचाराः उत्पन्नाः–

'राजा किमर्थम् एतं मया सह प्रेषयन् अस्ति? राजकुमारी एतस्य कुतन्त्रादिकं निवेद्य सूचितवती अस्ति यत् एतद्विषये जागरूकता आश्रयणीया इति। मया इदानीं जागरूकतया भवितव्यम्'' इति।

आत्मनः चिन्ताक्रान्ततां क्षणमात्रेण निगृह्य उत्तुङ्गः स्वप्रयाणस्य उद्देशादिकं सङ्ग्रहेण नागसिंहम् उक्तवान्।

एतत् सर्वं श्रुत्वा नागसिंहः पुनः उपहासपूर्वकं पृष्टवान्– ''माणिक्यपुरीतः एतावद्दूरम् एकाकितया आगतः भवान् इतः अग्रे एकाकी सन् गन्तुं न शक्नोति वा? भवतः अचलं धैर्यम् एतावच्छीघ्रं चञ्चलं जातम् वा?'' इति।



तदा उत्तुङ्गः उक्तवान्– ''एकाकितया एव अहं गच्छामि इति चिन्तितवान् आसम्। किन्तु भवतः महाराजः अतीव दयालुः। मद्विषयकदयया सः मम साहाय्यं कर्तुम् इच्छति। अतः एव 'सैन्यं प्रेषयामि भवता सह' इति उक्तवान् माम्। अपि च राक्षसमृगः उपायेन मानवनिवासतः सुदूरं नीत्वा त्यक्तव्यः इति मम उद्देशः। तथाकरणेन न केवलं माणिक्यपुर्याः हितम्, अपि तु भवतः नागपुर्याः अपि हितम् एव भवति'' इति।

उत्तुङ्गस्य वचनं श्रुत्वा नागसिंहः परिहासपूर्वकम् उक्तवान्– ''नागपुर्याः विषये भवता चिन्तनीयं नास्ति। राक्षसमृगः किम्, बलवान् शत्रुः आगच्छति चेत् अपि अस्माकं राज्यस्य रक्षणम् अस्माभिः एव क्रियते। तदर्थं भवतः साहाय्यं नावश्यकम्। तदस्तु नाम। 'राक्षसमृगः मया दृष्टः' इति वदति किल भवान्! अस्मिन् काले अपि राक्षसमृगाः भवन्ति इति भवता उच्यमानायां कथायां कोऽपि न विश्वसिति। जनाः न मूर्खाः'' इति।

तदा उत्तुङ्गः– ''भवान् विश्वसितु अथवा मा विश्वसितु। राक्षसमृगः मया दृष्टः इति तु सत्यम्। न केवलम् एतावदेव, राक्षसमृगकारणतः माणिक्यपुर्याः समुद्रतीरे उद्भूतं भयङ्करं दृश्यम् अस्माकं सैनिकाः प्रत्यक्षं दृष्टवन्तः। राक्षसमृगेण यत्र यत्र सञ्चारः कृतः तत्र सर्वत्र वृक्षाः गृहाणि च भूमिसात् जाताः सन्ति। अतः तादृशं मृगं सम्मुखीकृत्य युद्धकरणेन न किमपि



प्रयोजनम् इति विचिन्त्य सः मृगः सुदूरं नीत्वा त्यक्तव्यः इति अस्माकं राजा निर्णीतवान् अस्ति। शताब्दिकापुष्पाणां निमित्तम् एव सः मृगः माणिक्यपुरीम् आगच्छति इति ज्ञातम्। अतः शताब्दिकापुष्पाणां साहाय्येन एव तं मृगं दूरं नेतुं प्रस्थितवान् अस्मि अहम्। यदि राक्षसमृगविषये भवतः भयम् अस्ति, तर्हि भवान् मया सह मा आगच्छतु। अहम् एकाकितया एव गच्छामि'' इति उक्तवान् दृढस्वरेण।

एतत् श्रुत्वा नागसिंहः– ''मम भयं वा? राक्षसमृगस्य दर्शनात् मम भीतिः वा? भयस्य अर्थम् एव न जानामि अहम्। प्राणान् अपि पणीकृत्य युद्धं कर्तुं शिक्षणं प्राप्तवान् दलनायकः अहम्'' इति साभिमानम् उक्तवान्।

तदा उत्तुङ्गः उक्तवान्– ''माणिक्यपुर्याम् अपि प्रशिक्षिताः सैनिकाः दलनायकाः च बहवः सन्ति। तथापि ते चिन्तितवन्तः यत्– राक्षसमृगं सम्मुखीकर्तुम् अस्माकं शक्तिः अपर्याप्ता इति। अतः किं शक्त्या? बहुविचिन्त्य राक्षसमृगतः रक्षणार्थम् एषः उपायः चिन्तितः अस्माभिः'' इति।

''भवतु। भवता आनीतानि शताब्दिकापुष्पाणि कुत्र सन्ति इदानीम्? कति पुष्पाणि सन्ति?'' इति पृष्टवान् नागसिंहः।

तदा उत्तुङ्गः उक्तवान्– ''बहूनि पुष्पाणि सन्ति। विकसितानि कानिचन पुष्पाणि मया आनीतानि। यदा नौका अधोमुखं जाता तदा कानिचन समुद्रे पतितानि। शताब्दिकापुष्पाणां गुच्छमेकम् आनीय महाराजाय दत्तवान् अस्मि। अवशिष्टानि अरण्यनायकस्य कौभवस्य गृहे सन्ति। अस्माकं प्रवासात् पूर्वं तानि पुष्पाणि अस्माभिः स्वीकरणीयानि'' इति।

''तर्हि शताब्दिकापुष्पाणां दर्शनार्थं मया राजभवनं गन्तव्यं खलु!'' इति पृष्टवान् नागसिंहः।

''आम्। किन्तु .....'' इति वदन् किमपि वक्तुम् उद्युक्तः उत्तुङ्गः मौनं स्थितवान्।

उत्तुङ्गस्य वचनं श्रुत्वा नागसिंहः



सन्तोषः'' इति उक्तवान्। यद्यपि एषः विषयः पूर्वमेव ज्ञातः आसीत् उत्तुङ्गेन, तथापि न प्रकटीकृतवान् सः।

''अस्माभिः कदा प्रस्थातव्यम् इति विचिन्त्य अनन्तरं भवन्तं सूचयामि अहम्। अनन्तरम् आवां मिलित्वा सेनाधिपतेः समीपं गच्छाव। तावत्पर्यन्तं भवान् भवतः वासस्थाने एव तिष्ठतु'' इति उक्तवान् नागसिंहः।

अनन्तरम् उत्तुङ्गः ततः प्रस्थाय स्ववासस्थानं गतवान्।

तत्र उपविश्य कुतश्चित् काचित् वार्ता आगच्छेत् वा इति प्रतीक्षां कृतवान्। सायङ्कालः जातः। रात्रिः अपि जाता। कुतश्चित् अपि कापि वार्ता न आगता। अतः राजभवने युवराज्ञ्याः मन्दिरतः शताब्दिकापुष्पाणि अदृश्यतां गतानि इति विषयम् अपि न जानाति उत्तुङ्गः।

अनन्तरदिने प्रातःकाले एव कौभवः त्वरया उत्तुङ्गस्य वासस्थानम् आगतवान्।

कौभवं दृष्ट्वा– ''किं प्रवृत्तम्? किमर्थम् एतावती त्वरा?'' इति सोद्वेगं पृष्टवान् उत्तुङ्गः।

तदा कौभवः सविषादम् उक्तवान्– ''भवता आनीतानि शताब्दिकापुष्पाणि न दृश्यन्ते। 'तानि पुष्पाणि सुरक्षितं स्थापयतु' इति मम पुत्रीं चित्रां वारं वारम् उक्तवान् आसम् अहम्। सा अपि स्वप्रकोष्टे सुरक्षितं स्थापितवती आसीत्। अद्य प्रातः उत्थाय दृष्टं

तर्जनस्वरेण पृष्टवान्– ''किन्तु इत्युक्त्वा किमर्थं वचनं स्थगितवान् भवान्? किं पुष्पाणि राजभवने न सन्ति?'' इति।

''युवराज्ञी महाराजसकाशात् तानि शताब्दिकापुष्पाणि स्वीकृतवती इति जानामि। किन्तु तानि पुष्पाणि राजभवने कुत्र सन्ति इति न जानामि अहम्'' इति उक्तवान् उत्तुङ्गः।

एतत् श्रुत्वा नागसिंहः हसन्– ''तं विषयम् अहं महाराजम् एव पृच्छेयम्। महाराज्ञी तु मम अग्रजा एव। भवान् जानाति वा एतं विषयम्?'' इति पृष्टवान्।

तदा उत्तुङ्गः- ''एवं वा? महाराज्ञी भवतः भगिनी एव इति इदानीं ज्ञातं मया। महान्

चेत् तत्र न आसन् पुष्पाणि। पुष्पाणि यत्र स्थापितानि आसन् तं प्रकोष्टं प्रति कोऽपि आगतवान् स्यात् इति वक्तुम् अपि न शक्यते। यतः तादृशं चिह्नं किमपि न दृश्यते तस्मिन् प्रकोष्टे। विनोदार्थं सखीभिः तानि पुष्पाणि स्वीकृतानि स्युः इति मत्वा मम पुत्री सर्वाः सखीः पृष्टवती। ताः सर्वाः 'वयं न जानीमः' इति उक्तवत्यः। कथं तानि पुष्पाणि अदृश्यतां गतानि इति तु न ज्ञायते। तत्र तु राक्षसमृगस्य आगमनस्य सम्भवः नास्ति खलु!'' इति।

एतत् सर्वं श्रुत्वा उत्तुङ्गः— ''समुद्रतीरतः आगन्तुं शिलानां मध्ये यः मार्गः अस्ति सः अतीव लघुमार्गः। तेन मार्गेण महाकारकः राक्षसमृगः आगन्तुं सर्वथा न शक्नोति। यदि राक्षसमृगः एव आगतवान् स्यात् तर्हि सर्वनाशः अभविष्यत्। अतः एतत् राक्षसमृगस्य कार्यं सर्वथा न'' इति उक्तवान् दृढस्वरेण।

''तर्हि एतत् केन कृतं स्यात् इति चिन्तयति भवान्?'' इति पृष्टवान् कौभवः।

तदा उत्तुङ्गः किञ्चित्कालं विचिन्त्य— ''दलनायकः नागसिंहः ह्यः एव राजधानीम् आगतवान् अस्ति। महाराजः नागसिंहं मया सह प्रेषयितुं निश्चितवान् अस्ति। सम्भाषणावसरे मया एव उक्तम् आसीत् यत्— शताब्दिकापुष्पाणि भवतः समीपे सन्ति इति। अपि च नागसिंहः नागपुर्याः सिंहासनन्निमित्तं कुतन्त्रम् आचरन् अस्ति इति युवराज्ञी मां सूचितवती आसीत्।



नागसिंहतः महाराजस्य अपि क्लेशः भवेत्। अतः नागसिंहः एव भवतः गृहे विद्यमानानि शताब्दिकापुष्पाणि अपहृतवान् स्यात् इति मन्ये'' इत्युक्त्वा युवराज्ञया उक्तान् सर्वान् विषयान् कौभवं निवेदितवान्।

उत्तुङ्गस्य वचनं श्रुत्वा कौभवः– ''नागसिंहः महाराजविषये असूयावान् द्वेषवान् च अस्ति, नागपुर्याः सिंहासनार्थं प्रयतमानश्च अस्ति इति इतःपूर्वमेव श्रुतवान् अस्मि अहम्। तादृशः दुष्टः साहाय्यकत्वेन भवता सह प्रेष्यते इति तु दौर्भाग्यस्य विषयः। तेन सह भवान् जागरूकया व्यवहरतु। दलनायकः भवते वार्तां प्रेषयामि इत्युक्तवान् खलु! अतः भवान् अत्रैव तिष्ठतु। अहं महाराजसमीपं गत्वा शताब्दिकापुष्पाणाम् अदृश्यतां निवेद्य आगच्छामि'' इत्युक्त्वा ततः गतवान्।

कौभवः प्रवृत्तं सर्वं राजानं निवेदितवान्।

एतत् श्रुत्वा राजा– ''भवतः गृहे विद्यमानानि अपि शताब्दिकापुष्पाणि न दृश्यन्ते वा? एतेन न केवलं राक्षसमृगस्य, अन्यस्यापि कस्यचित् शताब्दिकापुष्पाणाम् आवश्यकता अस्ति इति ज्ञायते'' इति उक्तवान्।

अनन्तरं राजा भटद्वारा सेनाधिपतिम् आहूतवान्।

सेनाधिपतेः आगमनानन्तरं महाराजः सोद्वेगम् उक्तवान्– ''दुर्जय! कौभवस्य गृहे विद्यमानानि पुष्पाणि अपि अदृश्यतां प्राप्तानि। किमपि कुतन्त्रम् आरब्धम् इति भासते'' इति।

तदा सेनाधिपतिः उक्तवान्– ''प्रभो! सर्वं विचित्रं दृश्यते। ये कुतन्त्रम् आचरन्ति तादृशान् शीघ्रातिशीघ्रमेव भवतः समीपम् आनेष्यामि'' इति।

अनन्तरं कौभवः उत्तुङ्गेन उक्तान् विषयान् सेनाधिपतिं निवेदितवान्।

तत् श्रुत्वा सेनाधिपतिः शिरश्चालनपूर्वकं कौभवम् उक्तवान्– ''एवं तर्हि भवतः गृहे शताब्दिकापुष्पाणि सन्ति इति विषयं नागसिंहः जानाति स्म'' इति।

–(अनुवर्तते)





# राजा जातः हस्तिपकः

स्वजीवितैककार्यं वेतालवहनम् एव इति चिन्तयन् इव त्रिविक्रमः वृक्षसमीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! स्वीकृतस्य कार्यस्य सिद्ध्यर्थं प्रयत्नः, सततोद्योगः इत्यादयः तु श्लाघ्याः एव। किन्तु मम प्रश्नः एषः यत् भवान् इतोऽपि कियत्कालम् एतादृशं व्यर्थं प्रयत्नं कुर्वन् तिष्ठेत् इति। गच्छता कालेन वार्धक्यं प्राप्येत भवता। तदानीं भवतः बुद्धितीक्ष्णता, विवेचनशक्तिः च कुण्ठिता भवेत्। तदा भवान् उदयपुर्याः राजा सूर्यसिंहः इव असमीचीनान् निर्णयान् कुर्यात्। विषयस्पष्टतार्थं सूर्यसिंहस्य कथां श्रावयामि। मार्गायासपरिहारार्थम् एतां कथां श्रद्धया शृणोतु" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



उदयपुर्याः राजा सूर्यसिंहः महावीरः दयामयः च।

न्यायमार्गेण राज्यं पालयन् सूर्यसिंहः प्रजानां प्रीतिं सम्पादितवान् आसीत्। किन्तु दौर्भाग्यं नाम सः निस्सन्तानः। 'मम मरणानन्तरम् उत्तराधिकारी कोऽपि नास्ति' इति चिन्तयन् महान्तं खेदम् अनुभवति स्म राजा। एवं सन्तानराहित्यचिन्ता तं सदा पीडयति स्म।

सन्तानराहित्यविषयं सदा चिन्तयन् राजा वार्धक्यं प्राप्तवान्। अतः सः राज्यशासनभारं मन्त्रिणाम् उपरि आरोपितवान्। एतस्य परिणामतः शासनव्यवस्थायां कानिचित् परिवर्तनानि जातानि। सूर्यसिंहः एतत् न लक्षितवान्। राजोद्योगिषु उत्कोचस्वीकार-प्रवृत्तिः प्रवृद्धा। राज्ये चोरवञ्चकानां सङ्ख्यायां विशेषवृद्धिः जाता।

सूर्यसिंहस्य आस्थाने हस्तिपकः भद्रः अपि कश्चन उद्योगी। राज्ञः भद्रस्य चापि प्रायः समानं वयः। बहुभ्यः वर्षेभ्यः सः पट्टगजायाः हस्तिपकः आसीत्।

कदाचित् भद्रस्य आरोग्यं नष्टम्। एतत् ज्ञात्वा राजा तस्य चिकित्सार्थं धनं प्रेषितवान्।

पक्षानन्तरं किञ्चित् स्वास्थ्यं प्राप्य भद्रः राजसमीपम् आगत्य उक्तवान्– "महाप्रभो! यदि भवतः अनुज्ञा स्यात् तर्हि मम मनसि स्थितं किञ्चित् निवेदयितुम् इच्छामि" इति।

"अस्तु तावत्। निस्सङ्कोचतया वदतु तावत्।भवतः आशयं पूरयितुं यत्नं करोमि" इति उक्तवान् सूर्यसिंहः।

"महाराज! मम पुत्रः प्रतापः गुरुकुले तिष्ठन् विद्याभ्यासं समापितवान्। सः कुत्रापि उद्योगं प्राप्तुम् अर्हति। किन्तु मम इच्छा यत् सः अन्यत्र उद्योगान्वेषणापेक्षया मम वृत्तिम् एव अनुवर्तयेत् इति। सः गजविद्यायां निपुणः। अतः इतः परं सः एव पट्टगजायाः हस्तिपकः भवतु इति मम प्रार्थना" इति उक्तवान् भद्रः।

तदा सूर्यसिंहः उक्तवान्– "अत्र कः क्लेशः? श्वः भवान् स्वपुत्रं गजशालां प्रति प्रेषयतु। तस्य नैपुण्यं कीदृशम् इति द्रष्टव्यं

मया" इति।

अनन्तरदिने प्रतापः गजशालाम् आगतः। तत्र कालमेघः नाम गजः आसीत्। सः नितराम् उद्धतः।

तस्य निग्रहणं दुस्साध्यम् कष्टकरं च इति सर्वे भावयन्ति स्म। "एतं गजम् आरुह्य प्रासादं परिक्रम्य आगच्छतु" इति प्रतापम् आदिष्टवान् राजा।

प्रतापं दृष्ट्वा कालमेघः उच्चैः बृंहणम् अकरोत्। प्रतापः तु किञ्चिदपि भीतिम् अप्राप्नुवन् गजम् आरुह्य उपविश्य अङ्कुशेन तं निगृह्य प्रासादस्य परिक्रमणं कृत्वा आगतवान्।

एतत् दृष्ट्वा सन्तुष्टः राजा प्रतापस्य नैपुण्यम् अवगच्छन् तं पट्टगजायाः वज्रदन्त्याः हस्तिपकं कृतवान्।

प्रतिवर्षं इव तस्मिन् अपि वर्षे सूर्यसिंहस्य जन्मदिनोत्सवाचरणनिमित्तं नगरस्य मार्गाः अलङ्कृताः। वरण्डके उपविश्य शोभायात्रया आगच्छन्तं महाराजं द्रष्टुं जनाः मार्गम् उभयतः स्थिताः आसन्।

यदा राजा गजस्य उपरि स्थिते वरण्डके उपविष्टवान् तदा प्रतापः गजं चोदितवान्। गजः मन्दगत्या ततः अग्रे अगच्छत्। तत्काले आकाशः मेघैः आच्छन्नः आसीत्। मार्गम् उभयतः स्थिताः प्रजाः राजानं दृष्ट्वा उच्चैः हर्षध्वनिम् अकुर्वन्।

मार्गे तत्र तत्र स्वागतद्वाराणि तोरणानि च रचितानि आसन्। तेषां मध्ये गच्छन्ती यावत् सा मुख्य-स्वागत-तोरणस्य समीपं गतवती





अतः भवान् यत् इच्छति तत् ददामि। भवतः मनसि का अपेक्षा अस्ति इति वदतु तावत्'' इति उक्तवान्।

राज्ञः वचनं श्रुत्वा प्रतापः चिन्तने मग्नः। किं प्रष्टव्यम् इति तस्य समस्या। तस्य मनसि त्रिविधाः अपेक्षाः आसन्। तस्य मित्रं गुरुकुलस्य सहाध्यायी च जनार्दनः राजास्थाने उद्योगं प्राप्तुं प्रयत्नं कृत्वा असफलः आसीत्। एतादृशाय उद्योगः दापनीयः इति तु सुहृद्धर्मः।

प्रतापस्य प्रतिवेशिनः वीरदासस्य गृहं प्रविश्य चोराः सर्वस्वम् अपहृत्य पलायितवन्तः आसन्। नगररक्षकाः अपि चोराणां ग्रहणे अन्वेषणे वा असमर्थाः आसन्। एतादृशस्य साहाय्यं करणीयम् इति तु मानवताधर्मः।

प्रतापस्य गुरुः सुबोधवर्यः व्याधिकारणतः शय्याम् आश्रितवान् आसीत्। बहुधा चिकित्सां कृत्वा अपि व्याधिं निवारयितुम् अशक्ताः वैद्याः उक्तवन्तः आसन् यत् राजवैद्यः एकः एव एतं व्याधिं निवारयितुं समर्थः इति। विद्यादातुः उपकारः करणीयः इति तु शिष्यधर्मः।

एतेषु त्रिषु किं कार्यं करणीयम् इति निर्णेतुम् अशक्नुवन् प्रतापः किञ्चित्कालं मौनं स्थितवान्।

चिन्तामग्नं प्रतापं पृष्टवान् सूर्यसिंहः– ''प्रताप! किं चिन्तयन् अस्ति भवान्? किं प्रष्टव्यम् इति वा? अपेक्षां निस्सङ्कोचं वदतु

तावता द्वारस्य उपरि महान् अशनिः सशब्दं पतितः।

अशनिपातात् द्वारं सशब्दम् अपतत्। तावता प्रतापः अङ्कुशेन गजां सम्यक् पीडयन् चोदितवान्। गजा अग्रे अधावत्। प्रतापस्य समयस्फूर्त्या राजा अपायात् रक्षितः अभवत्।

मन्दगत्या गच्छन्ती गजा विद्युद्वेगेन यथा धावेत् तथा कारणं न सामान्यैः साध्यम्। तदर्थं विशेषज्ञानं नैपुण्यं च नितराम् अपेक्ष्यते। प्रतापस्य चातुर्यम् अवलोकितवान् राजा।

अपायात् रक्षितः राजा प्रासादं प्रतिगत्य प्रतापं प्रशंसन्– ''भवता अद्य अहं रक्षितः।

तावत्। अवश्यं भवतः अपेक्षां पूरयिष्यामि अहम्'' इति।

तदा प्रतापः मनसि आगतान् त्रीन् अपि विकल्पान् राजानम् उक्तवान्।

स्वलाभम् अचिन्तयतः परोपकारम् एव चिन्तयतः प्रतापस्य व्यवहारेण राजा आश्चर्यचकितः।

यदि अन्यः स्यात् तर्हि धनम्, उच्चपदवीं, भोगसाधनं वा पृच्छेत्, न तु परहितकरं किञ्चित्।

आश्चर्यं प्राप्य अपि राजा तत् अप्रकटयन्– ''भवतः तिस्रः अपि अपेक्षाः युक्ताः एव। भवते या अधिकं रोचते तां वदतु। ताम् अहं पूरयिष्यामि'' इति।

प्रतापः क्षणकालस्य मौनस्य अनन्तरं– ''प्रभो! राजोद्योगिषु उत्कोचस्वीकरणेच्छा प्रवृद्धा अस्ति। अतः उत्कोचग्राहिणः गृहीत्वा कठोरं दण्डयतु। तेन उत्कोचस्वीकरणं समूलं नाशितं भवति'' इति।

एतत् श्रुत्वा राजा आनन्दातिरेकेण आसनात् उत्थाय प्रतापसमीपम् आगतवान्।

प्रतापम् आलिङ्ग्य– ''मम उत्तराधिकारी कोऽपि नास्ति इति चिन्ता अद्य अपगता मम। मम मरणानन्तरं राज्यस्य का गतिः इति मम महती चिन्ता आसीत्। अद्य सा चिन्ता अपि अपगता। अचिरात् एव भवन्तं दत्तकरूपेण स्वीकृत्य युवराजं कृत्वा सिंहासने उपवेशयिष्यामि। मम अनन्तरम् उदयपुर्याः पालकः भवान् एव'' इति उक्तवान्।



बेतालः एवं कथां समाप्य अवदत्– "राजन्! राजा सूर्यसिंहः हस्तिपकं सिंहासने यत् उपवेशितवान् तत् किम् उचितम्? प्रतापे तादृशं वैशिष्ट्यं किं दृष्टं राज्ञा? प्रतापस्य मनसि पूर्वं तिस्रः अपेक्षाः आसन्। किन्तु यदा राज्ञा उक्तं यत् एकाम् एव अपेक्षां पूरयिष्यामि इति तदा प्रतापः चतुर्थीम् अन्याम् एव अपेक्षां प्रकटितवान्। किमर्थं प्रतापः तथा कृतवान्? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "प्रतापं सिंहासने उपवेशयता सूर्यसिंहेन समीचीनः निर्णयः एव कृतः। प्रतापः यदा तिस्रः अपेक्षाः प्रकटितवान् तदा राजा उक्तवान् यत् एकाम् एव पूरयामि इति। तदा प्रतापः चतुर्थीम् अपेक्षां प्रकटितवान्। किन्तु आश्चर्यं नाम तेन उक्ता चतुर्थी अपेक्षा पूरिता चेत् अन्याः तिस्रः अपेक्षाः अपि स्वयं पूरिताः भवन्ति स्म। उत्कोचग्राहिणाम् अधिकारिणां कारणतः एव तस्य मित्रेण राजास्थाने उद्योगः न प्राप्तः आसीत्। तत्कारणतः एव चोरितानि वस्तूनि न प्रतिप्राप्तानि आसन् प्रतिवेशिना। करुणामयः राजा गुरोः अस्वास्थ्यं श्रुत्वा चिकित्साम् अवश्यं कारयति इति चिन्तितवान् आसीत् प्रतापः। यद्यपि अवकाशः आसीत्, तथापि स्वनिमित्तं कामपि अपेक्षां न प्रकटितवान् प्रतापः। चतसृणाम् अपेक्षाणां द्वारा प्रतापस्य परहितचिन्तनं, देशभक्तिः च निरूपितं जातम्। राज्ञि एते एव गुणाः खलु अपेक्षिताः? अतः सूर्यसिंहः प्रतापं स्वस्य उत्तराधिकारिणं कृतवान्। सूर्यसिंहेन योग्या व्यक्तिः चिता, योग्यः निर्णयः कृतः च" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# र स वा र्ताः

## मानवोदरं प्रविष्टः मूषकशिशुः

चीनादेशे मूषकपीडा अधिका। तत्रत्येषु मूषकेषु बहुविधत्वम् अस्ति। जियाङ्ग्सुप्रदेशे गुवाम् सियाङ्गुग्रामे निवसन्ती हाङ्गु होंक्सिया कदाचित् विचित्रम् अनुभवं प्राप्तवती। यदा सा रात्री गभीरनिद्रायां मग्ना आसीत् तदा कश्चन लघुः मूषकः तस्याः मुखं प्रविष्टवान्। तदा सा उच्चैः क्रन्दनं कृतवती। तस्मात् भीतः तस्याः पतिः दीपं प्रज्वाल्य दृष्टवान्। मुखस्य अन्तः कण्ठभागे मूषकस्य पुच्छं केवलं दृश्यते स्म। तं मूषकं बहिः आकृष्टुं बहुधा प्रयत्नं कृतवान् तस्याः पतिः। किन्तु सः न शक्तः। अनन्तरं सः पत्नीं वैद्यसमीपं नीतवान्। वैद्यः सूच्यौषधं गुलिकाः च दत्तवान्। दिनत्रयं यावत् हाङ्गु होंक्सियायाः अनुभवः भवति स्म यत् उदरे सजीवः मूषकः इतस्ततः भ्रमन् अस्ति इव। अनन्तरं तस्य मूषकस्य स्थितिरेव तया कदापि न ज्ञाता।



## धूमपाने अग्रेसरः

अमेरिकादेशे धूमपाननिषेधः यथा अस्ति तथैव धूमपानप्रियाणां महती सङ्ख्या अपि अस्ति। कस्मिंश्चित् वार्षिके उत्सवे 'जिम्' नामकः कश्चित् १५५ धूमवर्तिकानां धूमं सेवमानः नवं विक्रमं कृतवान् अस्ति। एतस्मिन् वर्षे सः धूमवर्तिकानाम् एकैकशः सेवनं परित्यज्य युगपत् एव तावत्यः धूमवर्तिकाः मुखे संस्थाप्य सेवमानः नूतनं विक्रमं प्रदर्शितवान्।

## अत्यल्पवयस्कः विमानचालकः

कोण्टियागोप्रदेशीयः नववर्षीयः अगस्टिन् ओर्टिज्नामकः बालकः गते अक्टोबर्मासे एकयन्त्रात्मकं विमानम् एकाकितया चालयन् नूतनं विक्रमं प्रदर्शितवान्। विमानचालकेषु अत्यल्पवयस्कः एषः एकः एव।



## शतायुष्कयोः भगिन्योः आत्मकथा

न्यूयार्कनगरीयाभ्यां एलिजबेत् डिलानी, सारा डिलानी इत्येताभ्यां कृष्णवर्णीयमूलाभ्यां भगिनीभ्यां रचितः 'डिलानीभगिन्योः शतवर्षात्मकं जीवनम्' (हॅविंग् अवर् से – डिलानी सिस्टर्स् हण्ड्रेड् इयर्स्) इत्येषः आत्मकथात्मकः ग्रन्थः समीचीनतया विक्रीयमाणः अस्ति। विद्यावत्याः साराडिलानीवर्यायाः वयः १०४ वर्षाणि। दन्तवैद्यायाः एलिजबेत्डिलानीवर्यायाः वयः च १०२ वर्षाणि। उत्तमेन आरोग्येण युक्ते एते वदतः यत् आवाम् इतोऽपि विंशति वर्षाणि यावत् जीवावः इति।

# विचित्राः प्रश्नाः

मल्लेशः नाम युवकः कदाचित् श्रुतवान् यत् कमलेशस्य आपणे लिपिकारोद्योगस्य अवकाशः अस्ति इति। अतः सः कमलेशं दृष्ट्वा स्वस्य उद्योगापेक्षां निवेदितवान्। कमलेशः मल्लेशं नखशिखान्तं दृष्ट्वा स्वस्य हस्तम् अग्रे प्रसार्य पृष्टवान्– ''एतासु पञ्चसु अङ्गुलीषु कतमा उन्नता?'' इति।

''मध्यमाङ्गुली उन्नता'' इति उक्तवान् मल्लेशः।

''न। सर्वासाम् अपि अङ्गुलीनां वयोन्नतिः समाना'' इति उक्तवान् कमलेशः। ततः सः स्वस्य वामहस्तं प्रदर्शयन् पुनः पृष्टवान्– ''एतासु अङ्गुलीषु कतमा कनिष्ठा?'' इति।

''सर्वाः अपि अङ्गुल्यः वयसा समानाः'' इति उक्तवान् मल्लेशः।

''न। कनिष्ठिका आकारेण कनिष्ठा'' इति उक्तवान् कमलेशः। क्षणकालानन्तरं कमलेशः एव मल्लेशं पृष्टवान्– ''एतस्मात् भवता किं ज्ञातम्?'' इति।

''अत्र मया उद्योगः न प्राप्यते इति ज्ञातम्'' इति उक्तवान् मल्लेशः।

''नैव। भवते उद्योगः दीयते मया। श्वः एव आगत्य उद्योगित्वेन कार्यं कर्तुम् अर्हति भवान्'' इति मन्दहासपूर्वकम् उक्तवान् कमलेशः।

तदा मल्लेशः निराकरणपूर्वकं शिरः चालयन्– ''विचित्रं प्रश्नं पृच्छतः, विचित्रम् उत्तरं वदतः भवतः आपणे कार्यकरणस्य अपेक्षया भिक्षायाचनं वरम्'' इति उक्त्वा वेगेन ततः निर्गतवान्।



# चन्दमामायाः अनुबन्धः—६३

अस्मद्देशीया पशुपक्षिसम्पत्—

## बुल्बुल्पक्षिणः




अन्तरिक्षप्रयाणं कुर्वन् राकेशशर्मा भूमिं दृष्ट्वा उक्तवान् आसीत्— "सर्वदेशानाम् अपेक्षया भारतम् एव सुन्दरतया विराजते" इति। सुप्रसिद्धः कविः महम्मद् इक्बाल्— 'सारे जहाँ से अच्छा हिन्दुस्थान हमारा' इति वदन्— "हम बुलबुले हैं इसके, ये गुलिस्थान हमारा" (एषः देशः उद्यानम्। वयम् उद्यानविहारिणः बुलबुल्पक्षिणः) इति उक्तवान् अस्ति। एतेन ज्ञायते खलु बुलबुल्पक्षिणः उद्यानशोभाकारिणः इति? एते बुलबुल्पक्षिणः वृक्षात् वृक्षं डयमानाः मधुरं कूजन्तः उद्यानपरिसरे सजीवतां पूरयन्ति।

एवं हि श्रूयते यत् अस्मद्देशीयाः बुलबुल्पक्षिणः न गायन्ति इति, पर्शियनमूलाः केवलं गायन्ति इति च। जहङ्गीरुचक्रवर्तिनः पत्नी नूरजहान् एतं पक्षिणं भारतम् आनीतवती। एतज्जातीयाः पक्षिणः इदानीं काश्मीरप्रदेशे पर्वतोपत्यकासु दृश्यन्ते। एतेषां शरीरं धूसरवर्णेन, शिरः कृष्णवर्णेन कपोलौ श्वेतवर्णेन च युक्ताः भवन्ति।

शिरसि चूडया, कण्ठ-पुच्छयोः कृष्णवर्णेन, अवशिष्टे शरीरे धूसरवर्णेन च युक्ताः गुल्दु-जातीयाः बुलबुल्पक्षिणः एव अधिकतमा दृश्यन्ते। एतादृशानां पक्षिणां पुच्छस्य आरम्भभागः रक्तवर्णीयः, अग्रभागः श्वेतवर्णीयश्च भवति। रक्तवर्णीयनासिकायुक्तानां बुलबुल्पक्षिणां शिरसि कृष्णवर्णीया चूडा भवति। एतेषां शरीरस्य उपरिभागः धूसरवर्णीयः अधोभागश्च श्वेतवर्णीयः। वक्षःस्थलस्य अधोभागे मालासदृशी काचित् रेखा अस्ति। रक्तवर्णीयनासिकायुक्तान् पक्षिणः "सिपायी बुलबुल्" इति वदन्ति।

सहजीवनं कुर्वन्तः एते पक्षिणः सदा कलहायमानाः भवन्ति। किन्तु एते स्वनीडान् स्वच्छं स्थापयन्ति।



# आधुनिकाः भारतीयचित्रकाराः



## अमृताषेर्-गिल्

आधुनिकभारतीयचित्रकलारङ्गे विशिष्टं स्थानं प्राप्तवती अमृताषेर्-गिल् उत्तम-कलाकारिणी, प्रतिभावती च। सा नवविंशतितमे वयसि एव दिवङ्गता।

अमृताषेर्-गिल् १९१३ तमे वर्षे हङ्गरीराज्यस्य राजधान्यां बुडापेष्ट्नगरे जन्म प्राप्तवती। एतस्याः पिता राजा उम्रावुसिङ्ग् षेर् गिल्, माता च मेरी। एतस्याः पिता संस्कृतम्, पर्षियन् इत्यादीः अनेकाः भाषाः जानाति स्म। उम्रावुसिङ्ग् षेर् गिल् महान् धनिकः।

अमृताषेर् शैशवे एव चित्रकलाविषये आसक्ता आसीत्। १९२१ तमे वर्षे अमृतायाः मातापितरौ भारतदेशस्य सिम्लाप्रदेशम् आगत्य तत्रैव स्थिररूपेण वासम् आरब्धवन्तौ। तत्रत्यैः पर्वतशिखरैः, रमणीयैः प्रकृतिदृश्यैः च आकृष्टा अभवत् अमृता। पुत्र्याः विद्याभ्यासः युरोप्नगरे भवतु इत्याशया तस्याः मातापितरौ पुत्रीं इटलीदेशस्य फ्लारेन्स्नगरं नीतवन्तौ। तत्र अमृता चित्रकलाविषये महतीम् आसक्तिं दर्शितवती। एतेन सन्तुष्टौ तस्याः मातापितरौ पुत्र्यै चित्रकलाविषये उन्नतं शिक्षणं दातुम् इच्छन्तौ तां प्यारिस्नगरस्य प्रसिद्धचित्रकलाशालां



प्रवेशितवन्ती। किन्तु अमृतायाः आरम्भतः अपि भारतीयचित्रकलाविषये एव अधिका अभिरुचिः। युरोपुदेशस्य चित्राणाम् अपेक्षया भारतदेशस्य अजन्तादीनि चित्राणि एव तस्यै रोचन्ते स्म। अतः अमृता भारतदेशम् आगत्य अमृतसर्-सिम्ला इत्यादीनां प्रदेशानां जीवनं चित्रयितुम् आरब्धवती। किन्तु भारतीय-



कलाविमर्शकानां पद्धतिः तस्यै न अरोचत। अतः सा १९३८ तमे वर्षे पुनः युरोपुदेशं गत्वा हङ्गरीप्रदेशस्य स्वकीयं कञ्चन बन्धुं परिणीतवती। अनन्तर-काले विदेशीयपद्धत्या चित्राणि लेखितुम् आरब्धवती अमृता। १९३९ तमे वर्षे अमृता पुनः भारतदेशम् आगतवती। भारतस्य इतिहासचित्राणि लेखितुम् आरब्धवती च। किन्तु दौर्भाग्यवशात् अस्वस्था सा १९४१ तमे वर्षे दिवङ्गता।

तस्याः चित्रं वास्तविकता-काल्पनिकतयोः मिश्रणम् इति जनाः वदन्ति। तया लिखितानि मानवचित्राणि सजीवानि इव भासन्ते।

# भवन्तः जानन्ति वा?

१. किं दिनं 'प्रपञ्चपरिवर्तनदिनम्' इति आचर्यते?
२. 'नागार्जुनसागर'जलबन्धः कस्याः नद्याः सम्बन्धी?
३. ३५० वर्षेभ्यः पूर्वं कः टास्मानियादेशं न्यूजीलण्डदेशं च अन्विष्टवान्?
४. इंग्लीषुसमुद्रकुल्यायां कः भारतीयः ऐदम्प्राथम्येन तरणं कृतवान्?
५. १९६१ तमवर्षस्य एप्रिल्मासस्य द्वादशः दिनाङ्कः, १९६९ तमवर्षस्य जुलैमासस्य २१ तमः दिनाङ्कः— इत्येतयोः किं वैशिष्ट्यम्?
६. पुराणेषु उल्लिखितं कुबेरपुर्याः नाम किम्?
७. 'फार्मोसा'देशस्य अपरं नाम किम्?
८. कश्चन भारतीयः कस्यचित् रोमनृपचक्रवर्तिनः पाचकः आसीत् इति श्रूयते। सः पाचकः कः? स च चक्रवर्ती च कः?
९. 'सुमो-मल्लयुद्धं' कुत्र प्रचलति?
१०. 'तमाशा'नामकानि जानपदरूपकाणि अस्मद्देशे कुत्र दृश्यन्ते?
११. कः देशः अत्यधिकप्रमाणेन कारुवाहनानि निर्माति?
१२. अतिप्राचीनः भारतीयः वैद्यग्रन्थः कः?
१३. होमियोपतिवैद्यपद्धत्याः मूलपुरुषः कः?
१४. अस्मद्देशीयः कः समुद्रतीरस्थः प्रदेशः प्रपञ्चस्तरे सौन्दर्येण वैशाल्येन द्वितीयत्वेन स्थानः अस्ति?
१५. आधुनिकाः 'ओलम्पिक्क्रीडाः' ऐदम्प्राथम्येन कुत्र प्रवृत्ताः?
१६. उत्तरभारते यथा 'षहनाय्'वाद्यं प्रसिद्धं तथा दक्षिणभारते किं वाद्यं प्रसिद्धम्?

## उत्तराणि

१. जून्-२१ दिनाङ्कः।
२. कृष्णानद्याः।
३. एबल् टास्मान्।
४. पश्चिमबङ्गालप्रदेशीयः मिहिरसेनः। (१९५८ तमे वर्षे)
५. प्रथमम् उल्लिखिते दिनाङ्के सोवियत्रूसदेशीयः यूरी गागारिन् अन्तरिक्षं गतवान्। अनन्तरदिनाङ्के अमेरिकादेशीयः नीलम् आर्मस्ट्राङ्ग् चन्द्रमण्डले पदं निक्षिप्तवान्।
६. अलका।
७. 'तायवान्' इति।
८. जम्बीनियन्। कान्स्टान्टिन्नृपचक्रवर्ती। (६ शतके)
९. जपानदेशे।
१०. महाराष्ट्रराज्ये।
११. अमेरिकादेशः।
१२. चरकसंहिता।
१३. जर्मनुदेशीयः हानिमन्।
१४. मद्रासनगरस्थं मरीना बीच्।
१५. ग्रीसुदेशस्थे एथेन्सुनगरे। (१८९६ तमे वर्षे)
१६. नादस्वरवाद्यम्।



# विजेता वीरः

वीरनामकः युवकः सुन्दरः, चतुरः, साहसी च। तस्य बाल्यकाले एव मातापितरौ दिवङ्गतौ। अनन्तरं तस्य पितामही वीरं महता वात्सल्येन पोषितवती। साहसिनः वीरस्य आशयः आसीत् यत् सैन्यं प्रविश्य राज्यरक्षणं करणीयम् इति। किन्तु एतत् न इच्छति स्म तस्य पितामही।

कानिचन वर्षाणि अतीतानि। पितामही दिवङ्गता। अनन्तरं 'सैनिकेन भवितव्यम्' इति या इच्छा आसीत् ताम् इच्छां साकारीकर्तुं राजधानीं प्रति प्रस्थितः वीरः। नगरं प्रति अरण्यमार्गेण गन्तव्यम् आसीत्।

वीरः यदा अरण्ये किञ्चिद्दूरं गतवान् तदा 'तिष्ठतु। अग्रे पादं मा स्थापयतु' इति कश्चन ध्वनिः श्रुतः।

वीरः परितः दृष्टवान्। पार्श्वे एव स्थितेन केनचित् कुरूपिणा एतत् वचनम् उक्तम् आसीत्। अनन्तरं कुरूपी उक्तवान्– ''भवान् यत्र पादं स्थापयितुम् उद्युक्तः तत्र काचित् पिपीलिका अस्ति। पिपीलिका प्राणभयात् क्रन्दनम् अकरोत्। अतः पिपीलिकाविषये करुणा उत्पन्ना मम'' इति।

वीरः तत्र द्रष्टवान्। वस्तुतः काचित् पिपीलिका आसीत् तत्र।

एतेन चकितः वीरः उक्तवान्– ''पिपीलिकायाः क्रन्दनं श्रुतवान् वा भवान्? विश्वसितुम् एव कष्टम्'' इति।

तदा कुरूपी– ''मम नाम 'ध्वनिः' इति। अल्पम् अपि शब्दं श्रोतुं शक्नोमि अहम्'' इति उक्तवान्।

एतत् श्रुत्वा वीरः आश्चर्येण पृष्टवान्– ''एतादृशः अपूर्वशक्तिमान् भवान् निष्प्रयोजकः सन् अरण्ये किमर्थं वसति?'' इति।



वीरस्य वचनम् अङ्गीकृत्य ध्वनिः तेन सह प्रस्थितः। किञ्चिद्दूरं गमनानन्तरं श्रान्तौ तौ जलान्वेषणं कर्तुम् उद्युक्तौ। तदा "तीव्रः आतपः अस्ति। किञ्चित् विश्रम्य गम्यताम्" इति वचनं श्रुतं ताभ्याम्।

कश्चित् महाकुरूपी एतत् वचनम् उक्तवान् आसीत्। सः ध्वनेः अपेक्षया अपि कुरूपी आसीत्। अनन्तरं तेन दत्तं जलं पीतवन्तौ वीरः ध्वनिश्च।

अनन्तरं सः कुरूपी वीरम् उक्तवान्– "भवता कटिप्रदेशे यः धनस्यूतः बद्धः अस्ति, तस्य ग्रन्थिः शिथिलः जातः अस्ति। इतोऽपि शिथिलः भवति चेत् धनस्यूतः पतेत्। जागरूकः भवतु" इति।

तदा ध्वनिः दीर्घं निःश्वस्य उक्तवान्– "जनानां मध्ये यदि वासं करोमि, तर्हि मम विरूपकारणतः अवश्यम् अहम् अपमानितः भवेयम्। तदपेक्षया प्रशान्ते वातावरणे अरण्ये जीवनम् एव उ  ममम् इति चिन्तयामि अहम्" इति।

तदा वीरः वात्सल्येन ध्वनेः स्कन्धयोः हस्तं स्थापयन् उक्तवान्– "अत्र भवतः दोषः कोऽपि नास्ति। तथापि किमर्थम् आत्मानं दण्डयति भवान्? सैन्यं प्रविश्य देशसेवा करणीया इत्यभिलाषया नगरं गच्छन् अस्मि अहम्। देशसेवार्थं भवतः साहाय्यम् अपि अत्यावश्यकम्। अतः भवान् मया सह आगच्छतु" इति।

वीरः धनस्यूतं दृष्टवान्। आश्चर्यं नाम कुरूपिणा यत् उक्तं तत् सत्यम् एव आसीत्। एतेन चकितः वीरः पृष्टवान्– "अन्तः विद्यमानःधनस्यूतः भवता कथं दृष्टः?" इति

तदा कुरूपी उक्तवान्– "मम नाम सुदृष्टिः इति। वस्त्रस्य अन्तः विद्यमानं किं, भित्तेः अपरपार्श्वे, योजनदूरे वा विद्यमानं वस्तु अपि अहं द्रष्टुं शक्नोमि" इति।

"एतादृशी अपूर्वा शक्तिः कथं प्राप्ता भवता?" इति कुतूहलेन पृष्टवान् वीरः।

"एषा मम सहजा शक्तिः। सर्वं भगवतः कृपा" इति उक्तवान् सुदृष्टिः।

एतत् श्रुत्वा वीरः आश्चर्येण– "भवतः एतादृशी अपूर्वविद्या देशस्य प्रयोजनाय न

भवति चेत् महत् अन्याय्यम् एव। एतया विद्यया किमपि प्रयोजनं साधयाम। अतः भवान् अपि आवाभ्यां सह नगरम् आगच्छतु'' इति उक्तवान्।

सुदृष्टिः एतत् अङ्गीकृतवान्। ते त्रयः अपि किञ्चिद्दूरं यदा गतवन्तः तदा ''तिष्ठन्तु। समीपतः एव कुतश्चित् व्याघ्रागमनस्य शब्दः श्रूयते'' इति वदन् ध्वनिः वीरस्य सुदृष्टेः च अग्रे गमनं निवारितवान्। तावता एव व्याघ्रः गुल्मस्य पृष्टभागात् आगत्य तेषाम् उपरि आक्रमणार्थम् उद्युक्तः। अपरक्षणे एव काचित् महाशिला व्याघ्रस्य उपरि पातिता। महाशिलया ताडितः व्याघ्रः विलपन् प्राणान् अत्यजत्।



''किमिदं विचित्रम्?'' इति चिन्तयन् वीरः परितः दृष्टवान्। पार्श्वे एव कश्चित् महाकुरूपी स्थितवान् आसीत्। 'एषः एव कुरूपी अस्मान् व्याघ्रात् रक्षितवान्' इति चिन्तयित्वा वीरः तं पृष्टवान्– ''दर्शनेन भवान् दुर्बलः इति भाति। किन्तु महतीम् अपि शिलाम् उन्नीय व्याघ्रस्य उपरि कथं पातितवान् भवान्?' इति।

एतत् श्रुत्वा कुरूपी उच्चैः हसन् उक्तवान्– ''मम नाम सुशक्तिः। अहं नेत्राभ्याम् आदेशं करोमि चेत् यावती वा महाशिला भवतु, मया यत्र सूच्यते तत्र पतति'' इति।

तदा ''एवं तर्हि भवता अपि अस्माभिः सह नगरम् आगन्तव्यम् एव'' इति उक्तवान् वीरः। सुशक्तिः वीरस्य वचनम् अङ्गीकृतवान्।

ते चत्वारः अपि नगरम् उद्दिश्य गतवन्तः।

सायङ्कालसमये ते उन्नतस्य पर्वतस्य समीपं गतवन्तः। तस्मिन् पर्वते प्राचीनं किञ्चन दुर्गम् आसीत्।

पर्वतस्य अधोभागे विद्यमानां काञ्चित् गुहां प्रदर्शयन् सुदृष्टिः उक्तवान्– ''अद्य रात्रौ एतस्यां गुहायां वसाम'' इति।

तदा वीरः उक्तवान्– ''गुहायां वायुः सम्यक् न वाति। अतः एतस्मिन् दुर्गे एव



वसाम अद्य रात्रौ'' इति।

चत्वारः अपि पर्वतम् आरुह्य दुर्गसमीपं गतवन्तः।

दुर्गस्य द्वारं पिहितम् आसीत्। द्वारप्रदेशे बहवः जतुकाः इतस्ततः अटन्त्यः आसन्। वीरः द्वारं सशब्दं ताडितवान्। तदा जतुकाः 'टपटप्' शब्दं कुर्वत्यः धावितवत्यः।

दुर्गस्य द्वारस्य अन्तः विद्यमानं समग्रं स्पष्टं द्रष्टुं शक्नोति स्म सुदृष्टिः। द्वारस्य अन्तर्भागतः कश्चित् वृद्धः राक्षसः मन्दं मन्दम् आगतवान्। द्वारस्य पार्श्वे भित्तौ विद्यमानान् कृत्रिमान् दन्तान् नखान् च धृतवान्। कृत्रिमं शृङ्गं च शिरसि दृढं बद्धवान्।

एतत् सर्वं दृष्ट्वा सुदृष्टिः उक्तवान्– ''कश्चन परमवृद्धः राक्षसः कृत्रिमान् दन्त-नख-शृङ्गादीन् धृत्वा इतः एव आगच्छन् अस्ति। इदानीं किं करणीयम् अस्माभिः? इतः पलायनं कुर्मः वा?'' इति।

तावता एव वृद्धराक्षसः द्वारसमीपम् आगत्य– ''वत्स! सर्वाङ्गसुन्दर! द्वारशब्दं भवान् एव कृतवान् खलु?'' इति पृष्टवान्।

तदा वीरः धैर्येण उक्तवान्– ''द्वारम् उद्घाटयतु राक्षसवर्य! भवतः पुत्रः अस्मान् प्रेषितवान् अस्ति'' इति।

राक्षसः उद्वेगेन द्वारम् उद्घाट्य– ''मम पुत्रः कुत्र? कदा सः प्रत्यागमिष्यति? इदानीम् अपि मयि कोपः वा तस्य?'' इति एवं बहून् प्रश्नान् पृष्टवान्।

तदा महतीं श्रान्तिम् अभिनयन् वीरः– ''सूर्योदयात् पूर्वम् एव प्रस्थितवन्तः वयं निरन्तरप्रयाणेन नितरां श्रान्ताः स्मः। महता श्रमेण पर्वतम् आरुह्य एतावत्पर्यन्तम् आगताः। इतः परं स्थातुं किं, किमपि वक्तुम् अपि सामर्थ्यं नास्ति अस्माकम्। अतः अद्य रात्रौ किञ्चित् विश्रान्तिं प्राप्य श्वः प्रातः भवतः वत्सस्य विषयं विस्तरेण निवेदयिष्यामः'' इति उक्तवान्।

एतेन उत्तरेण तृप्तः सः वृद्धराक्षसः तेभ्यः खादितुं विविधानि फलानि दत्तवान्। पातुं क्षीरम् अपि दत्तवान्।

तेभ्यः चतुर्भ्यः अपि द्वारसमीपे एव शय्यां

सज्जीकृत्य– "सम्यक् निद्रां कुर्वन्तु। दुर्गस्य अन्तः दृष्टिप्रसारः अपि न करणीयः। वृद्धस्य मम एते नख-दन्तादयः कृत्रिमाः इति मा चिन्तयन्तु। जागरूकाः भवन्तु। यदि मम वचनस्य विरुद्धं भवतां व्यवहारः स्यात् तर्हि एकैकम् अपि विदार्य गर्ते क्षिपेयम्" इति उक्त्वा स्वप्रकोष्ठं गतवान्।

ततः अल्पे एव काले सः राक्षसः सशब्दं निद्रां कृतवान्।

ध्वनिः किञ्चित्कालं सश्रद्धं सर्वं श्रुत्वा– "अहो! अस्मिन् दुर्गे रुदत्याः कस्याश्चित् महिलायाः ध्वनिः श्रूयते" इति उक्तवान्।

"एवं वा?" इति वदन् उत्थाय सर्वत्र अन्वेषणं कृतवान् वीरः।

अन्तिमप्रकोष्ठे वातायनस्य पार्श्वे स्थित्वा कौमुदीं पश्यन्ती म्लानवदना काचित् सुन्दरी अश्रूणि स्रावयन्ती वीरेण दृष्टा। तस्याः वेषभूषादिकं, मुखलक्षणादिकं च दृष्ट्वा वीरः निर्णीतवान् यत् एषा काचित् राजकुमारी एव इति।

अकस्मात् उपस्थितं वीरं दृष्ट्वा सा आश्चर्यचकिता भीता च। तदा वीरः ताम् उक्तवान्– "आर्ये! भीतिः मास्तु। का भवती? भवत्याः साहाय्यार्थम् एव अहम् आगतः अस्मि" इति।

तदा सा सुन्दरी उक्तवती– "मम नाम हंसादेवी इति। एतस्य राज्यस्य युवराज्ञी अहम्। चतुर्भ्यः दिनेभ्यः पूर्वं सखिभिः सह पर्वतसमीपस्थं देव्याः आलयम् आगतां मां एषः राक्षसः बलात् गृहीत्वा आकाशमार्गेण





आनीय अत्र बन्धने स्थापितवान्। एतस्य पुत्रः सर्वाङ्गसुन्दरः मां दृष्ट्वा अनुरक्तः सन्– 'एताम् एव अहं परिणेष्यामि, नान्याम्' इति पितरम् उक्तवान्। वृद्धः राक्षसः तु राक्षसकुलजातां काञ्चित् स्नुषात्वेन इच्छति स्म। अतः विवाहविषये पिता-पुत्रयोः कलहः जातः। एतेन कुपितः सर्वाङ्गसुन्दरः दुर्गं परित्यज्य कुत्रापि गतवान्। एकमात्रस्य पुत्रस्य वियोगात् नितरां खिन्नः एषः वृद्धः राक्षसः पुत्रस्य प्रत्यागमनानन्तरं मां तस्मै वधूरूपेण दातुं निश्चित्य पुत्रस्य आगमनं प्रतीक्षमाणः अस्ति'' इति।

वीरः सर्वं श्रुत्वा– ''भद्रे! भीतिः मास्तु। सूर्योदयानन्तरं भवत्याः विमोचनं भविष्यति। भवत्याः विमोचनदायित्वं मम भवतु'' इति ताम् उक्त्वा स्वमित्राणां समीपम् आगतवान्।

यदा पूर्वस्यां दिशि प्रकाशः दृष्टः तदा राक्षसः कृत्रिमान् नख-दन्तादीन् धर्तुं विस्मृतवान्। तथैव वीरसमीपम् आगत्य– ''मम पुत्रः कुत्र? सः कं सन्देशं प्रेषितवान् अस्ति?'' इति पृष्टवान्। आगमनत्वरायां सः कृत्रिमाणां नख-शृङ्गदन्तादीनां धरणं विस्मृतवान् आसीत्।

वीरः राक्षसं विनयेन नमस्कृत्य– ''राक्षसवर्य! पुत्रविषयम् एव शोचतः भवतः नख-दन्त-शृङ्गादीनि रात्र्यभ्यन्तरे एव नष्टानि इति तु महतः खेदस्य विषयः अहो! भवतः पुत्रवात्सल्यम्!'' इति उक्तवान्।

नख-दन्तादीनां राहित्यं जानतः राक्षसस्य मुखं क्षणकालं म्लानम्। सः अपमानितश्च। तथापि अनन्तरक्षणे एव सः आत्मानं निगृह्य कोपेन– ''अये, भवन्तः मम पुत्रस्य मित्राणि इत्यतः भवतः सजीवं त्यजामि। मम पुत्रः कुत्र इति वदतु प्रथमम्'' इति गर्जितवान्।

तदा वीरः– ''राजकुमार्याः परिणये भवतः अङ्गीकारः अस्ति वा न वा इति पृष्ट्वा आगच्छतु इति भवतः पुत्रः मां प्रेषितवान् अस्ति। भवतः अनुमतिः नास्ति चेत् समुद्रे पतिष्यति सः'' इति उक्तवान्।

एतत् श्रुत्वा राक्षसः हस्ताभ्यां कर्णौ पिधाय– ''शान्तं पापम्, शान्तं पापम्। अशुभं मा वदतु। राजकुमारीं दुर्गे रक्षितवान्

अस्मि। 'शीघ्रम् आगच्छतु' इति अहम् उक्तवान् इति सर्वाङ्गसुन्दरं वदतु'' इति उक्तवान्।

''यदि भवतः अङ्गीकारः अस्ति इति सः ज्ञातवान् स्यात् तर्हि ह्यः रात्रौ एव सः अत्र आगमिष्यत्। तथा चेत् पर्वतमूले गुहायां कठिनायां शिलायां तस्य शयनं न अभविष्यत्'' इति उक्तवान् वीरः।

''किं,मम पुत्रः पर्वतमूले गुहायाम् अस्ति वा?'' इति वदन् वृद्धः महता आनन्देन पर्वतात् अवतीर्णः। वीरः अन्ये च वेगेन तम् अनुसृतवन्तः। राक्षसः करताडनं कुर्वन् गुहां प्रविष्टवान्।

वीरः हस्तसङ्केतं प्रदर्शितवान्। तदनुगुणं सुशक्तिः नेत्रादेशेन शिलाः प्रेरितवान्। चतस्रः शिलाः गुहाद्वारं सुदृढं पिहितम् अकुर्वन्।

अनन्तरं ते राजकुमारीसमीपं गत्वा प्रवृत्तं सर्वं निवेदितवन्तः। ततः राजकुमार्या पृष्टः वीरः स्वस्य गृहात् निर्गमनस्य कारणं विस्तरेण निवेदितवान्।

सर्वं श्रुत्वा राजकुमारी आश्चर्येण– ''सर्वम् अपि अत्याश्चर्यकरम् अस्ति। राज्ञि ये धैर्य-सौन्दर्य-शक्ति-साहसादयः भवेयुः ते सर्वे भवति सन्ति'' इति वदन्ती लज्जया शिरः अवनमय्य स्थितवती।

ततः ते सर्वे पर्वतमूलप्रदेशम् आगतवन्तः। ततः किञ्चिद्दूरं यदा गतं तदा ध्वनिः उक्तवान्– ''सुदूरे कुत्रापि गजस्य आगमनशब्दः श्रूयते'' इति।



"कुतः आगच्छति गजः! वदतु तावत्। शिलाप्रेरणेन तं गजं मारयिष्यामि" इति उक्तवान् सुशक्तिः।

सुदृष्टिः ध्वनिना सूचितं प्रदेशं परिशील्य– "तत्र आगच्छन् गजः न वन्यः, अपि तु पालितः। तस्य उपरि वरण्डके उष्णीषधारी वृद्धः उपविष्टः अस्ति। गजम् उभयतः शूलायुधधारिणः भटाः सन्ति। तेषां पृष्ठतः वाद्यहस्ताः उद्घोषकाः सन्ति" इति उक्तवान्।

तदा राजकुमारी– "एवं तर्हि सः आगच्छन् जनः अस्माकं महामन्त्री अभयवर्मवर्यः एव स्यात्। सः किमर्थम् अत्र आगच्छन् अस्ति इति तु न ज्ञायते" इति उक्तवती।

एतत् सर्वं श्रुत्वा वीरः– "राजकुमारि! भवती महामन्त्रिणा अभयवर्मणा मिलित्वा स्वभवनं प्राप्नोतु। अहं मित्रैः सह नगरं गत्वा कथमपि सैनिकोद्योगं प्राप्स्यामि। मम मित्राणि सगौरवं यथा जीवेयुः तथा करिष्यामि" इति उक्तवान्।

एतत् श्रुत्वा राजकुमारी लज्जामिश्रितेन कोपेन वीरं सकृत् दृष्ट्वा अग्रे गतवती।

दर्शनिमेषाभ्यन्तरे एव अभयवर्मा वीरस्य समीपम् आगत्य गजात् अवतीर्य वीरस्य हस्तौ प्रीत्या दृढं गृहीत्वा– "राजकुमार्याः मुखात् भवतः विषये सर्वं ज्ञातं मया। सैनिकत्वं प्राप्य देशसेवा करणीया इति खलु भवतः इच्छा! तर्हि अस्माकं महाराजस्य उत्तराधिकारी भूत्वा देशसेवां करोतु भवान्। महाराजेन उद्घोषितं यत् यः राजकुमारीम् आनेष्यति तस्मै अर्धं राज्यं दीयते इति। तां वार्तां सर्वत्र श्रावयितुम् एव अहं स्वयं प्रस्थितः आसम्। राजकुमारी भवते आत्मानम् एव समर्पयितुम् इच्छति। राक्षसं जयता भवता राजकुमार्याः हृदयम् अपि जितम्। तस्मात् अस्माकं राज्यस्य भावी राजा भवान् एव। इदानीं गजम् आरुह्य वरण्डके उपविशतु। भवतः मित्राणि अश्वान् आरुह्य अस्मान् अनुसरिष्यन्ति" इति उक्तवान्।






मणिपुरस्य राजा मणिध्वजः न केवलं शूरः, अपि च महाशिवभक्तः अपि। त्रिवारं सः यज्ञकुण्डे स्वशरीरम् एव समर्पितवान् आसीत्। दशवारं शिरः कर्तयित्वा आहुतिरूपेण यज्ञकुण्डे अर्पितवान् आसीत्। एवं विविधाभिः उग्रपूजाभिः शिवं सन्तोष्य बहून् वरान् प्राप्तवान् आसीत् सः।

यदा यदा मणिध्वजः उग्रपूजां करोति स्म तदा तदा शिवः अनन्यगतिकतया प्रत्यक्षः भवति स्म। तदा मणिध्वजः कमपि विशेषवरं प्राप्नोति स्म एव।

मणिध्वजः यदा इच्छति तदा शिवस्य त्रिशूलम् आगत्य शत्रुसंहारं करोति स्म। पाशुपतास्त्रम् अपि शत्रुसंहारे साहाय्यम् आचरति स्म। न केवलम् एतावत्, यदा मणिध्वजः इच्छति तदा स्वयं शिवः एव युद्धभूमिम् आगत्य शत्रुसंहारं यथा कुर्यात् तथा अपि वरं प्राप्तवान् आसीत् मणिध्वजः।

कस्मादपि मम अपजयः न भविष्यति इति, विपत्काले सः परशिवः एव मां रक्षिष्यति इति च चिन्तयन् मणिध्वजः निरङ्कुशतया गर्वेण च राज्यपालनं कुर्वन् आसीत्।

ये शिवेतरदेवे भक्तिं प्रदर्शयन्ति स्म तान् देशात् बहिष्करोति स्म सः। ये अन्यदेवान् पूजयन्ति स्म तान् विविधैः क्रमैः नितरां पीडयति स्म। ये शिवनाम न जपन्ति तेषां जिह्वाकर्तनं कारितवान्। ये शिवपूजां न कुर्वन्ति तेषां हस्तच्छेदनं कारितवान्। ये शिवं न नमस्कुर्वन्ति तादृशानां शिरच्छेदनं कारितवान्। राज्ये ऋते शिवालयात् अन्यः



कोऽपि आलयः न भवेत् इति आज्ञा कृता आसीत् तेन। शिवेतरदेवानाम् आलयाः समूलं नाशिताः आसन् तेन।

मणिध्वजस्य स्वेच्छाप्रवृत्त्या पीडिताः सर्वे अयोध्यां गत्वा रामं शरणं प्रार्थयमानाः स्वकष्टानि विस्तरेण निवेदितवन्तः।

रामः तेभ्यः अभयं दत्त्वा– "दर्पोद्धतस्य मणिध्वजस्य विनाशकालः सन्निहितः अस्ति। भवन्तः अत्र निश्चिन्ताः तिष्ठन्तु" इति उक्त्वा तेषां वासार्थं योग्यां व्यवस्थाम् उपकल्पितवान् आसीत्। ते सर्वे अयोध्यायां सुखेन जीवनं यापयन्ति स्म।

रामस्य यागाश्वः यदा मणिपुरराज्यं प्राविशत् तदा मणिध्वजः महता उत्साहेन अश्वं गृहीत्वा स्वस्य अश्वशालायां बन्धितवान्। सः चिन्तयति स्म यत्– अहं रामं पराजित्य मम पराक्रमं दर्शयामि इति।

"अश्वः त्यक्तव्यः। रामे स्नेहभावः प्रदर्शनीयः" इति एतं सन्देशं मणिध्वजं प्रति दूतद्वारा प्रेषितवान् लक्ष्मणः। किन्तु मदान्धः मणिध्वजः तप्तेन त्रिशूलेन दूतस्य पृष्ठतः तप्तरेखाः कारयित्वा– "महाशिवभक्तं रावणेश्वरं संहृतवन्तं रामं शिवप्रीत्यर्थं भैरवविग्रहस्य पुरतः चित्रवधक्रमेण बलिरूपेण अर्पयितुम् अहम् अवकाशं प्रतीक्षमाणः अस्मि। रामसदृशाः सहस्रशः आगताः चेदपि न काऽपि भीतिः मम। मम शत्रुत्वस्य स्मरणार्थं सर्वेषां शरीरेषु त्रिशूलचिह्नम् अङ्कयित्वा प्रेषयिष्यामि" इति सन्दिश्य दूतस्य शिरसः उपरि भस्मराशिम् एव पातितवान्।

एतावत्पर्यन्तं कुत्रापि विरोधः न दृष्टः आसीत् लक्ष्मण-भरत-शत्रुघ्नैः। इदानीं तु मणिध्वजस्य सम्मुखीकरणम् अनिवार्यं जातम्।

भरतेन कृतः पाञ्चजन्यसदृशस्य शङ्खस्य ध्वनिः दशसु अपि दिक्षु प्रतिध्वनितः अभवत्। शत्रुघ्नः च सुदर्शनचक्रम् इव विराजते स्म। लक्ष्मणः च आदिशेषः इव शत्रुसंहारे उद्युक्तः आसीत्। एतादृशम् आक्रमणं दीर्घकालं सोढुम् अशक्नुवन् मणिध्वजः साहाय्यार्थं शिवस्य त्रिशूलं स्मृतवान्।

मणिध्वजस्य पूजामन्दिरे स्थितं त्रिशूलं कालमेघः इव गर्जनं कुर्वत् विद्युद्वेगेन लक्ष्मणं लक्ष्यीकृत्य निरगच्छत्।

तावता तत्र आगतः हनूमान् लक्ष्मणस्य पुरतः स्थित्वा, गजः इक्षुदण्डं यथा गृह्णाति तथा त्रिशूलं वामहस्तेन लीलया गृहीत्वा परमशिवः इव विराजमानः अतिष्ठत्।

मणिध्वजः तु महाशिवः एव प्रत्यक्षः जातः इति भावयन् करौ योजयित्वा यावत् नमस्कर्तुम् उद्युक्तः तावता हनूमान् उच्चैः हसन्– "अये, शिवभक्त्यन्ध! अहं शिवः न। कपिकुले जातः हनूमान्। श्रीरामस्य चरणसेवकः" इति उक्त्वा गदाम् उन्नीय मणिध्वजं ताडयितुम् उद्युक्तः।

मणिध्वजः गदाप्रहारात् आत्मानं रक्षन् दूरं गत्वा परिवृत्य हनूमन्तं दृष्ट्वा कान्तिहीनः जातः।

हनूमतः जटाजूटादयः वायुवशात् विकीर्णाः आसन्। नेत्रे अग्निगोले इव घोरं विराजेते स्म। एकेन हस्तेन त्रिशूलं गृहीत्वा निर्भयभावेन तिष्ठन् हनूमान् अपरशिवः इव विराजते स्म। एतं घोरम् आकारं दृष्ट्वा प्रायः मम मरणं सन्निहितम् इति विचिन्त्य नितरां भीतः मणिध्वजः शिवस्य पाशुपतास्त्रं प्राप्तुम् आवश्यकं मन्त्रं कथमपि स्मृत्वा जपित्वा तत् प्राप्य लक्ष्मणादीन् उद्दिश्य प्रयुक्तवान्।

पाशुपतास्त्रस्य तापस्य कारणतः स च प्रदेशः नितरां सन्तप्तः जातः। तापं सोढुम् अशक्नुवन्तः, भरतः, शत्रुघ्नः, लक्ष्मणः इत्यादयः, सर्वे सैनिकाः च मूर्च्छां प्राप्य भूमौ पतितवन्तः।





हनूमान् रामनाम जपन् उरस्थलं विशालीकृत्य अस्त्रं सम्मुखीकृतवान्। पाशुपतास्त्रं हनूमतः उरसि घट्टितं सत् भङ्गं प्राप्य हनूमति एव लीनं जातम्। हनूमान् मणिध्वजस्य रथं गदया प्रहृत्य चूर्णीकृत्य मणिध्वजं मारयितुम् अग्रे गतवान्।

मणिध्वजः हनूमतः प्रहारैः नितरां पीडितः व्रणितः च भूत्वा भीत्या धावन् पूजामन्दिरं गत्वा शिवलिङ्गस्य उपरि शिरः निधाय– "रक्ष रक्ष हर! पालय माम्। कष्टनिवारक! पालय माम्" इति ईश्वरं प्रार्थितवान्।

"मणिध्वज! किम् एतत्? सहस्रशः रामाः आगताः चेदपि अहं भीतः न भवामि इति उक्तवतः भवतः धैर्यं कुत्र गतम्? रामसेवकम् अपि सम्मुखीकर्तुं सामर्थ्यं नास्ति वा भवतः? गच्छतु, युद्धं करोतु। अहं भवतः साहाय्यं करिष्यामि" इति वचनं शिवलिङ्गात् निर्गतम्।

भक्ताय यत् वचनं दत्तं तदनुगुणं शिवः नन्दिवाहनम् आरुह्य युद्धरङ्गे मणिध्वजस्य साहाय्यं कर्तुं पुरतः प्रत्यक्षः जातः।

हनूमान् शिवं दृष्ट्वा– "भवान् देवः एव स्यात् नाम, किन्तु भवतः दर्शनात् न काऽपि भीतिः मम। पश्यतु तावत् मम सामर्थ्यम्" इति सिंहगर्जनं कृत्वा शिवस्य उपरि आक्रमणं कृतवान्।

शिवस्य वाहनं नन्दी भीत्या शिवं पातयित्वा ततः अधावत्।

शिवः मन्दम् उत्थाय– "भवता मम त्रिशूलं हस्तेन गृहीतम्। पाशुपतास्त्रम् आत्मनि धृतम्। एतादृशं सामर्थ्यं महाविष्णोः केवलं भवति, न अन्यस्य। अतः वदतु– भवान् कः? स्वयं विष्णुः, उत तदंशसम्भूतः? कः भवान्?" इति पृष्टवान्।

"नाहं विष्णुः, न वा तदंशसम्भूतः। रामस्य पादसेवकः कपिकुले जातः सामान्यः कपिः अहम्। रामः एव मम देवः। बुद्धेः स्वभावः अपि कपेः स्वभावः इव चञ्चलः। रामे मम मनः केन्द्रीकुर्वन् अहं मनोबलं पराक्रमं च प्राप्तवान् अस्मि। एषा मम भक्तिः इति वा चिन्तयतु, साधनम् इति वा चिन्तयतु। समस्तलोकस्य कल्याणार्थं

श्रीरामः अश्वमेधयागं कुर्वन् अस्ति। अत्र न काऽपि शक्तिः, न कोऽपि देवः वा विघ्नं कर्तुम् अर्हति। भक्तिव्याजेन दुरहङ्कारं प्रदर्शयन् अस्ति एषः मणिध्वजः। एतादृशस्य साहाय्यं करोति खलु भवान्! धिक् भवतः एतादृशं स्वजनपक्षपातम्। धिक् भवतः सज्जनविरोधम्'' इति शिवम् उद्दिश्य उच्चस्वरेण उक्तवान् हनूमान्।

तदा शिवः कृतकं कोपं प्रदर्शयन्— ''अये, अहं मम तृतीयं फालनेत्रम् उन्मीलयामि। पश्यतु'' इति उक्तवान्।

''अवश्यं करोतु, येन भवतः भक्ताग्रेसरे विवेकः उदितः स्यात्'' इति उक्तवान् हनूमान्।



यदा शिवः तृतीयं नेत्रम् उन्मीलितवान् तदा प्रलयाग्निः हनूमन्तं लक्ष्यीकृत्य आगतः। हनूमान् अञ्जलिना तम् अग्निं गृहीत्वा पूर्वं शिवेन हालाहलं यथा पीतं तथा 'रामार्पणमस्तु' इति वदन् प्रलयाग्निं मुखे स्थापितवान्।

तदा शिवः मणिध्वजं पश्यन्— ''सर्वं दृष्टं खलु भवता? इतः परं मया किं वा कर्तुं शक्येत? वस्तुतः तु हनूमान् न अन्यः, अपि तु मत्स्वरूपी एव। मदंशसम्भूतः सः। अतः एव मम सर्वाः शक्तयः तस्मिन् लीनाः जाताः। वास्तविकी भक्तिः कीदृशी भवति इति भवता हनूमद्दर्शनात् ज्ञातव्यम्'' इति उक्त्वा ततः अन्तर्हितः जातः।

अत्रान्तरे हनूमान् द्रोणपर्वतं वायुवेगेन गत्वा सञ्जीविनीसस्यम् आनीय लक्ष्मण-भरत-शत्रुघ्नादीन् सैनिकान् चापि उज्जीवितवान्।

एतया घटनया मणिध्वजे विवेकः उदितः। सः जानुभ्याम् उपविश्य हनूमन्तं क्षमां प्रार्थितवान्।

तदा हनूमान् मणिध्वजम् उक्तवान्— ''स्वार्थकारणतः भवतः भगवद्भक्तिः निष्प्रयोजिका जाता। स्वप्रयोजनार्थं भवान् ईश्वरं सेवकम् इव उपयुक्तवान्। किम् एषा भक्तिः इति उच्यते? कदापि न। जीवजगतः सुखार्थं कार्यकरणम् एव वास्तविकी भक्तिः। भवादृशानां कारणतः देवाः अपि अपमानिताः भवन्ति। इदानीं किं जातं, पश्यतु।



भवत्कारणतः ईश्वरेण अपख्यातिः प्राप्ता। यदि एतया घटनया भवता विवेकः प्राप्तः स्यात् तर्हि द्वेषाहङ्कारादिकं परित्यज्य न्याय्येन मार्गेण राज्यं पालयतु। प्रजानां हितार्थं कार्यं करोतु। प्रजानां रक्षणं राज्ञः आद्यं कर्तव्यम्। यः राजा प्रजाहितं न चिन्तयति तस्य जीवितेन किं वा प्रयोजनम्? भवान् अज्ञानात् प्रमादं कृतवान् स्यात् नाम। सन्मार्गे गमनम् एव कृतस्य दोषस्य परिहारः। अतः इतः परं वा सन्मार्गगमनं चिन्तयन् स्वस्य राजत्वं रक्षतु'' इति।

एतत् श्रुत्वा मणिध्वजः– ''आञ्जनेयवर्य! गर्वभङ्गः एव विवेकस्य कारणं भवति। मयि विवेकोत्पादनार्थम् एव शिवः मया प्रार्थितान् सर्वान् वरान् दत्तवान् इति भाति। मया यागाश्वः बद्धः यत् तत् मम उपकाराय एव जातम्। मयि विवेकः उदितः। इतः परम् अहं रामसमीपं गत्वा क्षमां याचित्वा निवेदयामि यत् माम् अपि बन्धुकोटौ प्रवेशयतु इति'' इति उक्त्वा अश्वशालातः अश्वम् आनीय लक्ष्मणाय अर्पितवान्।

अनन्तरं सः सर्वान् आदरेण सत्कृतवान्। यागाश्वः ततः प्रस्थितः।

सर्वे तम् अनुसरन्तः निर्गतवन्तः।

मणिध्वजस्य शुभा शोभा चेति उभे पुत्र्यौ। ते यमले। ताभ्यां सह अयोध्यां गतः मणिध्वजः रामं दृष्ट्वा– ''मम अपराधान् क्षाम्यतु'' इति प्रार्थितवान्।

रामः मणिध्वजं मैत्रीभावेन पश्यन् सत्कृतवान्। अनन्तरं मणिध्वजः रामं प्रार्थितवान् यत् मम पुत्र्यौ लव-कुशयोः पत्न्यौ यथा स्यातां तथा अनुग्रहः करणीयः इति।

रामः एतं प्रस्तावम् अङ्गीकृतवान्। ''अश्वमेधयागस्य समाप्तेः अनन्तरं विवाहः प्रचलतु'' इति उक्तवान् सः।

ये पूर्वं राज्यात् बहिष्कृताः आसन् तान् सर्वान् आदरेण स्वराज्यं नीतवान् मणिध्वजः। 'प्रजाप्रीतिः एव शिवपूजा' 'प्रजासेवा एव शिवभक्तिः' इति भावयन् सः प्रजानां हितार्थं कार्यं कर्तुम् उद्युक्तः जातः।

महाराजे जातं परिवर्तनं दृष्ट्वा सर्वाः प्रजाः सन्तुष्टाः। एतस्य कारणभूतं श्रीरामं ते कृतज्ञतापूर्वकं स्मृतवन्तः।

यागाश्वः सर्वासु दिक्षु प्रयाणं कृत्वा अयोध्यां प्रति प्रत्यागच्छत्।

अश्वमेधयागस्य परिसमाप्तिकार्यक्रमार्थं किष्किन्धातः सुग्रीवादयः वानराः, लङ्कातः विभीषणादयः, मणिपुरतः मणिध्वजादयः अनेकेभ्यः देशेभ्यः अन्ये राजानः च अमूल्यानि उपायनानि स्वीकृत्य अयोध्याम् आगतवन्तः।

विभीषणः मुक्ता-रत्नादीनि शकटेषु आरोप्य आनीय रामाय समर्पितवान्। सुग्रीवः वज्र-सुवर्णादीनि आनीय समर्पितवान्। मणिध्वजः– पद्मरागमणीन् चीनाम्बराणि आनीय अर्पितवान्।

देशविदेशेभ्यः समागतैः राजभिः आनीतैः रजत-सुवर्ण-मुक्तादिभिः कोषागारं पूर्णम्। अवशिष्टानि प्रासादस्य पुरतः राशीकृतानि।

लक्ष्मणः-भरतः-शत्रुघ्नः च नानादेशेषु महास्वागतं सत्कारम्, उपायनानि प्राप्य दिग्विजयं समाप्य ससैन्यम् अयोध्यं प्रविष्टवन्तः।

हनुमता सह भरद्वाजः, अत्रिः, गौतमः, अगस्त्यः अन्ये च बहवः ऋषयः समागताः। हनुमान् रामस्य अस्त्रगुरुं महर्षिं विश्वामित्रं विशेषतः समामन्त्र्य आनीतवान्।

अश्वमेध-परिसमाप्ति-कार्यक्रमः महता वैभवेन सम्पन्नः। रामः धनधान्यादीनि प्रतिगृहं प्रेषितवान्। राज्ये स्थिताभ्यः सर्वाभ्यः सुमङ्गलीभ्यः रत्न-सुवर्णाभरणानि दत्तानि। यैः प्रजाहितकार्याणि कृतानि ते विशेषतः सत्कृताः अभवन्।

अनन्तरं मणिध्वजस्य आह्वानं पुरस्कृत्य सर्वे मणिपुरं प्रति गताः।

मणिपुरे कुश-शुभयोः, लव-शोभयोः च विवाहः महता वैभवेन यथाविधि सम्पन्नः। विवाहसन्दर्भे मणिध्वजः स्वकीयं समग्रं राज्यं लवाय कुशाय च उपायनरूपेण समर्पितवान्।

ततः अल्पे एव काले वानप्रस्थाश्रमम् अङ्गीकृत्य तपश्चर्यार्थम् अरण्यं प्रति निर्गतवान्।





# अहङ्कारनाशः

नरेन्द्रः कृष्णापुरस्य भूस्वामी। सः सज्जनः। सः पूर्वं विचिन्त्य एव कार्यं करोति। तस्य साहाय्यार्थं चत्वारः अधिकारिणः आसन्। एकैकस्य अधिकारिणः आधीन्ये पञ्चविंशतिः उद्योगिनः आसन्। अधिकारिणः अधीनानाम् उद्योगिनां द्वारा स्वकार्याणि कारयन्ति स्म। अतः भूस्वामिनः कार्याणि मन्दगत्या प्रचलन्ति स्म। एतं विषयं भूस्वामी नरेन्द्रः अपि ज्ञातवान्।

ऐदम्प्राथम्येन यदा एषः विषयः ज्ञातः तदा भूस्वामी झटिति न विश्वसितवान्। सः द्वित्राणि दिनानि सर्वं सुसूक्ष्मं परिशीलितवान्। ततः ज्ञातं यत्, यत् श्रुतं तत् सत्यम् एव इति। सः सर्वं मातरं निवेद्य– "तान् चतुरः अधिकारिणः अपि पदच्युतान् करिष्यामि" इति उक्तवान्।

तदा नरेन्द्रस्य माता उक्तवती– "वत्स! ते चत्वारः अधिकारिणः अपि वयसा ज्येष्ठाः। अस्माकं कुटुम्बस्य हितचिन्तकाः ते। यथा ज्वलन् दीपः कज्जलेन आवृतः भवति तथा एतेषु अल्पः दुर्गुणः उत्पन्नः अस्ति। उपायेन एषः दोषः निवारणीयः भवता। पदच्युतिः परिहारः सर्वथा न। अन्यच्च ते अधिकारिणः इदानीम् अपि अस्मद्विषये निष्ठावन्तः एव। तेषां दोषतः ग्रामीणाः केचन कष्टं प्राप्नुयुः। तेन साक्षात् अस्माकं हानिः न नास्ति खलु? अतः मौनं तिष्ठतु भवान्" इति।

'मौनं तिष्ठतु' इति मातुः उपदेशः तस्मै न अरोचत। किन्तु अधिकारिणः कथं समीकरणीयाः इति तु सः न जानाति। तथापि सः कदाचित् चतुरः अपि अधिकारिणः स्वसमीपम् आहूय पृष्टवान्– "मम कार्यालयस्य व्यवहाराः मन्दगत्या प्रचलन्ति इति भासते। सर्वे उद्योगिनः निष्ठया कार्यं



कुर्वन्तः सन्ति खलु?'' इति।

तदा ते अधिकारिणः विनयेन– ''सर्वे श्रद्धया एव कार्यं कुर्वन्तः सन्ति। किन्तु कार्यभारः दिने दिने वर्धते। अतः नूतनाः केचन उद्योगे नियोजनीयाः'' इति उक्तवन्तः।

छत्रपुरे नरेन्द्रस्य पितृव्यः आसीत्। तस्य नाम चतुरेशः इति। सः शतएकरपरिमितायाः भूमेः कृषिं स्वयं कारयन् सुखेन जीवति स्म। ये स्वसमीपम् आगच्छन्ति, तान् चतुरोक्त्या हासयति स्म चतुरेशः। 'पितृव्यः मम साहाय्यं कुर्यात्' इति विचिन्त्य नरेन्द्रः छत्रपुरं गतवान्।

चतुरेशः नरेन्द्रम् आदरेण स्वागतीकृत्य कुशलप्रश्नान् पृष्टवान्। स्वसमस्यां समग्रं निवेद्य नरेन्द्रः– ''मम समस्यायाः परिहारः कथमिति न ज्ञायते। वस्तुतः भवान् एव सुखी। विशालायाः भूमेः कृषिं कारयन् सुखेन जीवति। अहं तु भूस्वामित्वं निर्वोढुम् अशक्नुवन् कष्टम् अनुभवन् अस्मि'' इति।

तदा चतुरेशः हसन्– ''विशालायाः भूमेः कृषिः न हि सुलभा। किन्तु सर्वविधाः अपि समस्याः परिहर्तुं समर्थः अस्ति मम पुत्रः प्रकाशः। अतः सर्वं सम्यक् प्रचलति'' इति उक्तवान्।

एतत् श्रुत्वा नरेन्द्रः आश्चर्यम् अनुभवन्– ''एवं तर्हि प्रकाशः मया सह आगत्य मम समस्यां परिहर्तुं शक्नुयात् वा?'' इति पृष्टवान्।

''समस्यां परिहर्तुं तस्य सामर्थ्यम् अस्ति इत्यत्र तु नास्ति सन्देहः। मम पुत्रं भवता सह प्रेषयितुं न इच्छामि। यतः तस्य अहङ्कारः अधिकः। इदानीम् एव सः– 'अहं सर्वविधाः अपि समस्याः परिहरामि। अतः अहं पण्डितः' इति चिन्तयन् गर्वेण व्यवहरति। यदि सः भवतः समस्याम् अपि परिहरेत् तर्हि तस्य अहङ्कारः वर्धेत। तस्य अहङ्कारः कथं निवारणीयः इत्येव चिन्ता मम'' इति उक्तवान् चतुरेशः।

तदा नरेन्द्रः हसन्– ''एवं तर्हि प्रकाशः प्रथमं मम समस्यां परिहरति चेत् अनन्तरम् अहं भवतः समस्यां निवारयिष्यामि। एवम्

उभयोः अपि लाभः'' इति उक्तवान्।

''प्रकाशः भवतः समस्यां परिहरेत् नाम। किन्तु मम समस्या परिहृता भवेत् इत्यत्र नास्ति विश्वासः मम'' इति वदन् चतुरेशः प्रकाशस्य प्रेषणम् अङ्गीकृतवान्।

ततः सः पुनः नरेन्द्रम् उक्तवान्– ''समस्यापरिहारविषये प्रकाशसदृशः लोके नास्ति एव इति वचनं श्रुत्वा अहं भवतः समीपम् आगतः इति भवान् प्रकाशं वदतु। तदा सः अवश्यं भवता सह आगमिष्यति'' इति।

सायङ्काले प्रकाशः गृहम् आगतवान्। नरेन्द्रः चतुरेशेन यथा बोधितं तथा उक्त्वा तदीयं साहाय्यं प्रार्थितवान्।

प्रकाशः नरेन्द्रस्य समस्यां विस्तरेण श्रुत्वा– ''एतस्याः परिहारार्थं मया भवता सह आगन्तव्यं नास्ति। अहम् एकम् उपायं सूचयामि। तदनुगुणं व्यवहरतु। मासद्वयाभ्यन्तरे भवतः समस्या परिहृता भविष्यति'' इति उक्तवान्।

ततः नरेन्द्रः प्रकाशमुखात् समस्यापरिहारोपायं ज्ञात्वा कृष्णापुरम् आगतवान्।

अनन्तरम् नरेन्द्रः चतुरः अधिकारिणः आहूय उक्तवान्– ''भवन्तः यथा मम पितुः तथा ममापि विश्वासपात्राणि सन्ति। इदानीं व्यवहारनिर्वहणार्थं धनम् अपर्याप्तम्। यदि भवन्तः सर्वे सहकुर्युः तर्हि अहम् आयं बर्धयेयम्। यदि आवश्यकता भवति तर्हि नूतनान् काश्चन उद्योगे नियोजयाम।





कार्यस्य न्यूनता अस्ति चेत् विद्यमानेषु काँश्चित् न्यूनीकरवाम" इति।

चत्वारः अपि अधिकारिणः— "वयम् अवश्यं सहकुर्मः" इति वदन्तः— "नूतनाः केचन उद्योगे नियोजनीयाः" इति प्रार्थितवन्तः।

तदा नरेन्द्रः उक्तवान्— "तर्हि एवं भवतु। एकैकेन उद्योगिना किं किं करणीयम् इति कागदे लिखित्वा यच्छन्तु। एकैकः उद्योगी अपि किं किं कृतवान् इति लिखित्वा ददातु। एतेन किं प्रवर्तते इति स्पष्टं ज्ञायते। यदि कश्चित् उद्योगी सम्यक् कार्यं न करोति तर्हि भवद्भिः बोधनीयः सः" इति।

चत्वारः अपि अधिकारिणः एतं प्रस्तावं सोत्साहम् अङ्गीकृतवन्तः।

तदा नरेन्द्रः पुनः उक्तवान्— "भवन्तः तु सज्जनाः। तथापि धूर्ताः उद्योगिनः केचन भवतां सज्जनत्वस्य दुरुपयोगं प्राप्तुम् अर्हन्ति। अतः भवन्तः तत्तस्य कार्यं परिशील्य तेन यत् लिखितं तत् सम्यक् अस्ति वा न वा इति परीक्षां कुर्वन्तु। सम्यक् अस्ति चेत् प्रत्येकं पत्रं हस्ताङ्कनेन प्रमाणीकुर्वन्तु" इति।

एतदपि महता सन्तोषेण अङ्गीकृतम् अधिकारिभिः। ततः नरेन्द्रः कथनम् अनुवर्तितवान्— "ये अधिकं कार्यं कुर्वन्ति तेभ्यः अधिकं वेतनम्। ये न्यूनं कार्यं कुर्वन्ति तेभ्यः न्यूनं वेतनम्। वेतनदानाधिकारः च भवताम् एव" इति।

अधिकारिणः नरेन्द्रस्य बुद्धिमत्तां प्रशंसन्तः उक्तवन्तः— "यदि एषा योजना व्यवहारान्विता भवेत् तर्हि आयः निश्चयेन वर्धेत" इति।

"एतदर्थम् एव मम प्रयत्नः। भवन्तः तु सज्जनाः। केचन वञ्चकाः उद्योगिनः भवतः दाक्षिण्यजाले पातयेयुः अपि। केचन उद्योगिनः भवन्तः वाममार्गे यथा प्रवर्तेरन् तथापि कुर्युः। अकृतम् अपि कार्यं कागदे उल्लिख्य हस्ताङ्कनेन प्रमाणीक्रियताम् इति आग्रहं कुर्युः ते। भवन्तः हस्ताङ्कनं कर्तुम् अनिच्छन्तः, तादृशानां विरोधं सम्मुखीकर्तुम् अपि अनिच्छन्तः कष्टम् अनुभवेयुः। अतः

भवद्भिः यत् पत्रं हस्ताङ्कनेन प्रमाणीक्रियते तत् पत्रं तत्तद्दिने मत्समीपं प्रेषणीयम्। अहम् अपि उद्योगिनः सम्यक् कार्यं कुर्वन्तः सन्ति वा न वा इति परिशीलयिष्यामि। यथा लिखितं तथा कार्यं यः न करोति तस्य दण्डनं भविष्यति। यः पुनः पुनः दोषं करोति तम् उद्योगात् व्यावयितुम् अपि अर्हन्ति भवन्तः। दण्डनाधिकारः भवताम् एव। किन्तु निर्णयः यथायोग्यं यथा स्यात् तथा व्यवहर्तव्यं भवद्भिः" इति उक्तवान् नरेन्द्रः।



इदानीं नरेन्द्रस्य कथनस्य वास्तविकः आशयः ज्ञातः अधिकारिभिः। तेषां मुखं कान्तिहीनं जातम्।

यद्यपि सर्वोऽपि अधिकारः तेषाम् एव, तथापि कश्चित् उद्योगात् व्यावनीयः चेत्, कस्मैचित् अधिकं वेतनं दातव्यं चेत्, नूतनः उद्योगे नियोजनीयः चेत् वा कार्यम् आधाररूपेण द्रष्टव्यम् आसीत्।

एतत् सर्वं सुसूक्ष्मं परिशीलयितुम् एव नरेन्द्रः एतं मार्गम् अनुसृतवान् आसीत्। एतावत्पर्यन्तं कार्यस्य व्यवस्थितः उल्लेखनक्रमः न आसीत्। अतः ते यत् कुर्वन्ति तत् प्रश्नातीतं भवन्ति स्म। इतः परं तु न तथा।

मासः अतीतः। तदभ्यन्तरे सर्वे उद्योगिनः अधिकं कार्यं कृतवन्तः।

अधिकस्य कार्यस्य अधिकं वेतनम् इति नियमः तेषां प्रियः जातः। अधिकारिणः स्वगृहकार्यनिमित्तम् अन्यजनान् आश्रितवन्तः, न तु भूस्वामिनः उद्योगिनः।

कार्ये प्रगतिं दृष्ट्वा सन्तुष्टः नरेन्द्रः चक्रपुरं गत्वा चतुरेशं दृष्ट्वा उक्तवान्– "प्रकाशः न सामान्यः। तं मत्समीपं प्रेषयतु। मम प्रधानसहायकः सन् कार्यं करोतु सः" इति।

तदा चतुरेशः हसन्– "तस्य अपरिमितः अहङ्कारः इति मया पूर्वम् एव उक्तं खलु! सः भवन्तम् अनादरेण पश्यति। तत् सोढुं भवान् न शक्नोति। अतः तद्द्वारा कार्यं कारयितुं अपि न शक्नोति भवान्" इति उक्तवान्।

"प्रकाशस्य अहङ्कारविषये भवता पूर्वमेव उक्तम् आसीत्। तत् स्मरामि अहम्।



तस्य अहङ्कारस्य निवारणार्थं कश्चन उपायः चिन्तितः अस्ति मया। शबरीवने प्रद्युम्नः नाम कश्चन यतिवरः निवसति। सः महामेधावी। तस्य मेधाशक्तिः तावती अस्ति यत् लोके कोऽपि अणुमात्रेण अपि तत्सादृश्यं न अर्हति। सः केनापि सह सम्भाषणं न करोति। मत्समीपं कोऽपि यथा न आगच्छेत् तथा करणीयं भवता इति सः माम् उक्तवान् अस्ति। यदि सप्ताहं यावत् प्रकाशः तस्य आश्रमे तिष्ठेत् तर्हि प्रकाशस्य अहङ्कारः अपगच्छेत्, विवेकश्च उदियात्'' इति उक्तवान् नरेन्द्रः।

''अस्तु तर्हि। प्रकाशः प्रद्युम्नवर्यं यथा पश्येत् तथा करणं भवतः एव दायित्वम्। यदि प्रकाशे परिवर्तनं भवेत् तर्हि ममापि सन्तोषः एव'' इति उक्तवान् चतुरेशः।

सायं प्रकाशः यदा कृषिक्षेत्रात् प्रत्यागतः तदा नरेन्द्रः तं प्रद्युम्नविषयं निवेद्य– ''योगिनः ज्ञानं जनानाम् उपयोगाय भवेत् खलु? किन्तु प्रद्युम्नवर्यः अहङ्कारेण आश्रमे एव तिष्ठन् ज्ञानं गोपयति। अतः भवान् तं दृष्ट्वा तदीयं ज्ञानं जनोपकारकं यथा स्यात् तथा करोतु। एतत् कार्यं न अन्येन साध्यम् ऋते भवतः'' इति उक्तवान्।

अनन्तरदिने एव प्रकाशः प्रद्युम्नवर्यसमीपं गत्वा– ''भवतः ज्ञानं जनोपयोगि भवेत्'' इति बोधितवान्। तदा प्रद्युम्नवर्यः– ''माम् उपदिशतः भवतः ज्ञानं कियत्? मया यद्यत् अधीतं तत्सर्वं प्रथमं कथयामि। ततः उपदेष्टृयोग्यता स्वस्य अस्ति वा न वा इति भवान् एव स्वयं ज्ञास्यति'' इति उक्त्वा चत्वारि दिनानि यावत् आत्मना अधीतानां विषयाणां विवरणं दत्तवान्।

'तावन्ति शास्त्राणि सन्ति' इत्येव न जानाति स्म प्रकाशः। एकैकस्मिन् अपि शास्त्रे गभीरं ज्ञानम् आसीत् प्रद्युम्नवर्यस्य। सर्वं श्रुत्वा आश्चर्यम् अनुभवन् प्रकाशः– ''श्रीमन्! भवतः ज्ञानं तु अपूर्वम्। ज्ञानं जनोपकाराय भवेत् खलु? अतः एव अहं बहु अजानन् अपि जनान् समस्यापरिहारोपायान् वदन् जनोपकारं करोमि'' इति उक्त्वा आत्मना कृतम् उक्त्वा नरेन्द्रस्य यत् साहाय्यं

कृतं तदपि उक्तवान्।

प्रद्युम्नवर्यः सर्वं श्रुत्वा– "भवतः मुखदर्शनेन एव अहं ज्ञातवान् यत् भवान् महापुरुषः इति। भवतः सम्भाषणशैल्या भवन्तम् अवगतवान् अहम्। भवता युक्तम् एवं उक्तम्। लोके भवादृशाः एव अपेक्षिताः, न तु मादृशाः। अतः इतः परम् अपि भवान् प्रजानां मध्ये निवसन् उत्तमकार्याणि करोतु। मादृशानां कृते एषः आश्रमः एव उचितं स्थानम्" इति उक्तवान्।

ततः प्रत्यागतः प्रकाशः तत्र प्रवृत्तं सर्वं नरेन्द्रं पितरं च उक्तवान्।

'प्रद्युम्नवर्येण अपि श्लाघनं प्राप्तवतः एतस्य अहङ्कारः इतः परं निश्चयेन वर्धते' इति चिन्तितवन्तौ तौ। किन्तु आश्चर्यं नाम प्रकाशः तद्दिनादारभ्य आत्मश्लाघनं गर्वप्रदर्शनं च सर्वथा परित्यक्तवान्। सर्वैः सह विनयेन व्यवहरन् यथाशक्ति जनानां मार्गदर्शनं कुर्वन् उत्तमां कीर्तिं प्राप्तवान्।

प्रकाशे यत् परिवर्तनं जातं तत् नरेन्द्रः ज्ञातवान्।

तस्य कारणं तु एवम्– प्रद्युम्नः तु महाज्ञानी। ये तस्य समीपं स्वयम् आगच्छन्ति तेषां साहाय्यं करोत्येव सः। तादृशः महाज्ञानी अपि प्रकाशस्य प्रशंसां कुर्वन् प्रजानां मध्ये आगन्तुं न इष्टवान्। ज्ञानिनां तु कीर्तिसम्पादनेच्छा न भवति। प्रकाशः तु प्रसिद्धिप्राप्तीच्छया आत्मानं बहुधा ख्यापयति स्म। प्रद्युम्नवर्यस्य दर्शनात् प्रकाशः ज्ञातवान् यत् ज्ञानिनः आत्मख्यापनं न कुर्वन्ति इति।

प्रद्युम्नवर्यः विनयेन एव व्यवहरन् 'भवान् एव श्रेष्ठः' इति वदन् प्रकाशे अविद्यमानाम् अपि बुद्धिमत्तां प्रशंस्य प्रकाशं पराजितवान् आसीत्। एतत् अपि ज्ञातवान् आसीत् प्रकाशः। स्वानुभवात् यत् ज्ञायते तत् व्यवहारे परिवर्तनम् अवश्यम् आनयति खलु?

एवं प्रद्युम्नवर्यस्य दर्शनात् प्रकाशस्य अहङ्कारादयः अपगताः अभवन्।





# मातापितृसेवा

कश्चित् महान् दैवभक्तः आसीत् पूर्वम्। तीर्थयात्रा करणीया इति तस्य महती इच्छा। किन्तु गृहे वृद्धौ मातापितरौ आस्ताम् इति कारणतः सः तौ त्यक्त्वा बहिः गन्तुं न शक्नोति।

स्वकीयां दीनपरिस्थितिं चिन्तयन् दैवभक्तः मनसि महान्तं खेदम् अनुभवति। ''एतौ वृद्धौ त्यक्त्वा अहं तीर्थयात्रां कर्तुं सर्वथा न शक्नोमि। तस्मात् मोक्षप्राप्तिः अपि न शक्यते मया'' इति चिन्तयन् निराशः भवति स्म सः।

एवं स्थिते तस्य दैवभक्तस्य कश्चित् बन्धुः कदाचित् तस्य गृहम् आगतवान्। तस्य परिस्थितिं ज्ञात्वा बन्धुः उक्तवान्– ''भोः, भवान् तीर्थक्षेत्राणि गत्वा आगच्छतु। भवतः आगमनपर्यन्तम् अहं भवतः मातापित्रोः सेवां करोमि'' इति।

एतेन सन्तुष्टः भक्तः तीर्थयात्रार्थं प्रस्थितः। कानिचन दिनानि अतीतानि। भक्तः किञ्चन अरण्यं प्राप्तवान्। सः कस्यचित् द्वारा श्रुतवान् आसीत् यत्– तस्मिन् अरण्ये कुक्कुटनामकः संन्यासी अस्ति इति, तस्य दर्शनेन इष्टार्थसिद्धिः भविष्यति इति च। अतः भक्तः तस्य संन्यासिनः आश्रमं गतवान्। तत्र संन्यासी भक्तस्य चिन्तनानुसारं तपः कुर्वन् न आसीत्। अपि तु सामान्यः गृहस्थः इव जीवनं यापयति स्म। भक्तः आश्चर्येण संन्यासिनः व्यवहारं पश्यन् तत्रैव उपविष्टवान्।

संन्यासी पाकं कृतवान्। तत्र कौचित् वृद्धदम्पती आस्ताम्। ताभ्यां भोजनं परिवेषितवान्। तयोः दम्पत्योः सेवां कृतवान्। सर्वाणि कार्याणि समाप्य बहिः आगतवान्। तत्र उपविष्टं भक्तं पृष्टवान्–

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

"भोः! किंनिमित्तम् अत्र आगतवान् अस्ति भवान्?" इति।

तदा भक्तः– "महात्मन्! अहं तीर्थयात्रार्थं प्रस्थितवान् अस्मि। भवतः नाम श्रुतवान् आसम्। अतः भवतः दर्शनं कर्तुम् अहम् अत्र आगतवान्। इतः अनतिदूरे एव त्रिवेणीसङ्गमः अस्ति इति श्रुतवान् अस्मि। तत्र गन्तुं कृपया मार्गं दर्शयति वा भवान्?" इति सविनयं पृष्टवान्।

एतत् श्रुत्वा संन्यासी– "अहम् अत्र वृद्धयोः मम मातापित्रोः सेवां कुर्वन् अस्मि। तौ त्यक्त्वा अहं कुत्रापि न गतवान्। तस्मात् त्रिवेणीसङ्गममार्गं न जानामि अहम्" इत्युक्त्वा आश्रमस्य अन्तः गतवान्।

संन्यासी उत्तमं मार्गं बोधयति, हितवचनं च वदति इति विश्वस्य तत्र गतवान् आसीत् भक्तः। किन्तु संन्यासी समीपे विद्यमानम् अपि त्रिवेणीसङ्गमं न जानाति इति ज्ञात्वा संन्यासिविषयकं गौरवं न्यूनं जातं भक्तस्य। तथापि 'एतस्य संन्यासिनः विषये जनाः किमर्थम् महान्तम् आदरं प्रकटयेयुः?' इति चिन्तयन् तत्रैव किञ्चित्कालं स्थितवान् सः दैवभक्तः।

तावता तिस्रः महिलाः आगत्य आश्रमस्य अन्तः गतवत्यः। तासां तिसृणाम् अपि रूपम् अतीव असह्यम् आसीत्। ताः किमर्थम् आश्रमं प्रति आगताः स्युः इति कुतूहलेन तत्रैव स्थितवान् भक्तः।

किञ्चित्कालानन्तरं ताः तिस्रः अपि महिलाः बहिः आगताः। ताः अतीव सुन्दर्यः



आसन्। एतेन चकितः भक्तः ताः महिलाः पृष्टवान्– "मातरः! भवत्यः काः? केन निमित्तेन अत्र आगतवत्यः?" इति।

तदा ताः सुन्दर्यः उक्तवत्यः– "वत्स! वयं तिस्रः अपि सहोदर्यः। जनाः अस्मान् गङ्गा, यमुना, सरस्वती इति नाम्ना आह्वयन्ति। प्रयागसमीपे वयं तिस्रः अपि मिलित्वा नदीरूपेण प्रवहामः। देशस्य नानाभागेभ्यः जनाः पापनिवारणार्थम् आगत्य प्रयागे स्नानं कुर्वन्ति। ये जन्मदातारौ मातापितरौ एव उपेक्षितवन्तः, ये च महापापकार्याणि कृतवन्तः, तादृशाः आगत्य स्नानं कुर्वन्ति। तस्मात् अस्माकं रूपम् असह्यं भवति। तादृश्यः एव कुरूपिण्यः वयं भवता किञ्चित्कालपूर्वं दृष्टाः" इति।

"एवं वा?" इति साश्चर्यं पृष्टवान् दैवभक्तः।

तदा ताः सुन्दर्यः– "असह्यं रूपं प्राप्तवत्यः वयं तदा तदा एतम् आश्रमम् आगत्य एतस्य महात्मनः दर्शनं कुर्मः। तेन अस्माकं पापानि निवारितानि भवन्ति। वयं नैजं रूपं प्राप्नुमः। यदा वयम् अतीव पापभागिन्यः भवामः तदा एतस्य महात्मनः दर्शनार्थम् आगच्छामः" इत्युक्त्वा अदृश्याः जाताः।

तासां वचनं श्रुतवतः भक्तस्य मनसि महत् परिवर्तनं जातम्। बहुकालतः तीर्थयात्रा करणीया इति या इच्छा आसीत् सा अपि अपगता। अनन्तरं सः भक्तः ततः साक्षात् गृहं गतवान्। तद्दिनादारभ्य सः मातापितरौ एव साक्षात् देवौ मन्यमानः श्रद्धया मातापित्रोः सेवां कर्तुम् आरब्धवान्।

'परिश्रमेण गङ्गायमुनासरस्वतीनां सेवा करणीया इति अहं चिन्तितवान् आसम्। किन्तु ताः स्वयं साक्षात् प्रत्यक्षीभूताः इति तु मम सौभाग्यम्' इति चिन्तयन् अतीव सन्तुष्टः भक्तः।

मातापित्रोः सेवां कुर्वन् तिस्रः सहोदरीः गङ्गायमुनासरस्वतीः सदा स्मरन् सः भक्तः चिरकालं सुखं जीवितवान्।



# प्रकृतिवैचित्र्याणि–

## विना जलं जीवितुं समर्थाः प्राणिनः



नौकाः यथा जले प्रयाणं कुर्वन्ति तथैव उष्ट्राः मरुभूमौ प्रयाणं कुर्वन्ति। अदिनम् विना जलं प्रयाणं कुर्वन्ति ते। अतः एव उष्ट्राः 'मरुभूमिनौकाः' इत्युच्यन्ते लोके। उष्ट्राणां यः उन्नतः पृष्ठभागः भवति तत्र शक्तिदायकाः आहारांशाः भवन्ति। ते आहारांशाः शरीराय शक्तिं ददति। सामान्यतः उष्ट्राणां स्वेदः न भवति। अतः शरीरे स्थितः जलांशः तथैव तिष्ठति। किन्तु एते उष्ट्राः सकृत् जलस्थानं प्राप्नुवन्ति चेत् युगपत् पञ्चविंशति-ग्यालन् परिमितं जलं पिबन्ति। एते सामान्यतः शुष्कतृणानि खादन्ति।

## पिच्छं प्रसाधयन्ति पक्षिणः

पक्षिणां पिच्छं निष्कास्य जलेन आर्द्रीक्रियते चेत् रोमाणि पतन्ति। किन्तु पिच्छं यदा पक्षिणां शरीरे भवति, तदा आर्द्रं चेदपि, रोमाणि न पतन्ति। अत्र कारणं तु पक्षिणां शरीरे स्थिताः तैलग्रन्थयः। सामान्यतः सर्वविधपक्षिणाम् अपि पुच्छस्य अग्रभागे तैलग्रन्थिः भवति। पक्षी नासिकया पिच्छप्रसाधनं करोति चेत् तैलग्रन्थितः उत्पन्नं तैलं पिच्छं दृढं गृह्णाति। तैलांशसम्बन्धकारणतः पिच्छस्य उपरि पतिताः वृष्टिबिन्दवः झटिति अधः पतन्ति। अतः एव पक्षिणः सदा चञ्च्वा पिच्छं प्रसाधयन्ति। प्रसाधनसमये यः तैलांशः पक्षिणः मुखं प्रविशति सः 'डि' जीवसत्त्वं शरीराय ददाति।



## जन्तूनाम् आयुःप्रमाणम्

भोरीपियसुनामकः कूर्मः १५२ वर्षाणि जीवितवान् इति श्रूयते। एषः २००० वर्षेभ्यः पूर्वम् आसीत् इति भाव्यते। अमेरिकादेशे इदानीं सजीवं स्थितस्य 'करोलिना' नामकस्य कूर्मस्य वयः १२३ वर्षाणि। शाकाहारिषु पशुषु गजः सुदीर्घकालं – तत्राम ६०-७० वर्षाणि जीवति। जलगजः, खड्गमृगः च ४० वर्षाणि, भल्लूकः ३० वर्षाणि च जीवन्ति। जातिविशेषे जाताः अश्वाः ५० वर्षाणि जीवन्ति। शुनकस्य आयुः २२ वर्षाणि। केचन गृध्राः मूषकाः च ५० वर्षाणि जीवन्ति। केचन मीनाः ६० वर्षाणि जीवन्ति। अमेरिकादेशीयः ईल् ५० वर्षाणि जीवति इति श्रूयते।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!







It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.

From all of us here at Chandamama, have a great year in school. And remember to tell us what you've learnt everyday, when you come home from school !





THE
HANDAMAMA
OLLECTION

ARTIG 1246

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकाम् मे-९४ मासे प्रकटयिष्यामः।**


PRAMOD BHANUSHALI


DEVIDAS KASBEKAR

* उपरितन चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मासं-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * असन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट-कार्ड) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः –

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

**'जनवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः –**

प्रथमचित्रम् - **कर्मणि कुशलायाः कौशलपूर्णा सृष्टिः।**

द्वितीयचित्रम् - **श्रद्धायुक्तायाः निमिषविहीना दृष्टिः।**

प्रेषकः - विद्वान् ए. अनन्तकृष्णभट्टः, वि.वि. पीठम्, एनु.सि. कालोनी, होसपेटे-३, कर्णाटकम्।




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. **252.00**

अपने चन्दे की रकम डिमांड ड्राफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

